अथ त्रयस्त्रिंशः पटलः ।

---

षड्भूमिः ।

---

अथ वक्ष्ये विशेषेण षड्भूमिकविधिं परम् ।
तस्य विस्तारतुङ्गं तु प्रासादमानवद्भवेत् ॥ १ ॥
विस्तारं रुद्रधा भज्य गुणांशं गर्भगेहकम् ।
द्विभागं गृहपिण्डं स्यादलिन्द्रं शिवमागयः ॥ २ ॥
हारं शिवांशमानेन अलिन्द्रं वा स्थलं भवेत् ।
धरातले द्विभिभूमौ ... ... .... ... .... ... ॥ ३ ॥
वा(पा)दे तारया(तस्या)पनं यत्र तावद्वै सुदृढं घनम् ।
बाह्योचितमलंकारं मनाऽभ्यन्तरवद्भवेत् ॥ ४ ॥
ऊर्ध्वं विभजेत्तारं विन्यासं सूक्ष्मोत्त(स्त)रम् ।
भारं सौष्ठिकविस्तारं कोष्ठं तद्द्विगुणायतम् ॥ ५ ॥
भागेन पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
चतुष्कूटाष्टकोष्ठं च भानुपञ्जरसंयुतम् ॥ ६ ॥
हारान्तरं चतुर्विंशत्कल्पयेदतिभूतले ।
पञ्चारं हर्म्यमध्ये तु कण्ठेषु सौष्ठिकं भवेत् ॥ ७ ॥
पार्श्वयोः कर्णकूटस्य पञ्जरं परिकल्पयेत् ।
कोष्ठपञ्जरयोर्मध्ये कल्पयेत्तु विशेषतः ॥ ८ ॥
तदूर्ध्वभूतशांशेषु व्योमांशं कर्णकूटकम् ।
मध्ये पञ्जरमेकांशं कण्ठकूटमिवाऽऽकृतिः ॥ ९ ॥
द्विभागं कोष्ठदीर्घं स्यादर्धांशं पञ्जरस्य तु ।
शेषं हारान्तरं स्यात्तेषां संख्याऽऽदिभूमिवत् ॥ १० ॥
तस्योर्ध्वभूविशाले तु नवभागविभाजिते ।
कण्ठकूटवंशेन मध्यशाला गुणांशकम् ॥ ११ ॥
पञ्जरव्यासमेकांशमर्धांशं हरयोऽन्तरम् ।
तदूर्ध्वे वसुभागं तु शिवांशं कूटविस्तृतम् ॥ १२ ॥

मध्ये कोष्ठद्विभागेन एकांशं पञ्जरस्ततम् ।
हारान्तरमथार्धांशं कल्पयेत्कल्पवित्तमः ॥ १३ ॥
तस्योर्ध्वभूमिविस्तारं षड्भागं विभजेत्समम् ।
कूटमेकांशमानेन कोष्ठायामं तु तद्द्वयम् ॥ १४ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
तदूर्ध्वभूमिविस्तारमर्धांशं मध्यभद्रकम् ॥ १५ ॥
दण्डं वाऽध्यर्धदण्डं वा द्विदण्डं भद्रनीव्रकम् ।
तत्तुङ्गं सप्तपञ्चाशदंशं कृत्वा तु देशिकः ॥ १६ ॥
अधिष्ठानोच्चपञ्चांशिषड्भागं चरणोदयम् ।
पादहीनांशिभागं तु प(म)ञ्चमानमुदाहृतम् ॥ १७ ॥
पादोर्ध्वं सार्धपञ्चांशं मञ्चं सार्धविभागया ।
पादाधिकं तु पञ्चांशं पादायामिति स्मृतम् ॥ १८ ॥
सार्धद्विभागमञ्चोर्ध्वं पञ्चांशं चरणोदयम् ।
पादोदयं द्विभागं तु मस्तरोदयमीरितम् ॥ १९ ॥
पादहीनं तु पञ्चांशं तलिपस्योदयं भवेत् ।
द्विभागं मस्तरं स्यात्तमर्धाधिकयं युगांशकम् ॥ २० ॥
पादायामिदं स्यात्तं पादोनद्वयंशमञ्चकम् ।
कपोतांशं वेदिकामानं पादोनद्वयंशकं गलम् ॥ २१ ॥
सार्धवेदांशमानेन शीर्षकं परिकल्पयेत् ।
पक्षांशं तु विमानं च षड्भूमिकमेव हि ॥ २२ ॥
साष्टाविंशति(त)लानि स्युर्दिशत्कूटसमन्वितम् ।
षट्टपञ्जरोपेतं पादं प्रत्यल्पनासिकम् ॥ २३ ॥
होमादिस्तूपिपर्यन्तं चतुरश्रं प्रकल्पयेत् ।
शिखरे तु महानासिचत्वारि(सीश्रतस्रः)परिकल्पयेत् ॥ २४ ॥
अम्बुजासनमाख्यातं सर्वदेवप्रियावहम् ।
तदेव शिखरं कण्ठं वस्वश्रं परिकल्पयेत् ॥ २५ ॥
अधोपसौष्ठिकान्तं तु शीर्षकं चतुरश्रकम् ।
उद्गतावनतोपेतं भद्रं वाऽभद्रकोष्ठकम् ॥ २६ ॥
सान्तरप्रस्तरोपेतौ हीनौ वाऽपि समुन्नतौ ।
सुखाकरमिदं स्यात्तं तदेवं सौष्ठिशीर्षकम् ॥ २७ ॥

वृत्ताकारं प्रकल्प्यं नाम्ना तद्वद्वलीनकम् ।
तदेव शिखरे चाष्टौ कल्पि(प्रस्वल्प)नासियुतं महत् ॥ २८ ॥
शिवभद्रमिति ख्यातं शिवप्रीतिकरं परम् ।
तदेव द्व्यश्रवृत्ताभं शीर्षकं गलसंयुतम् ॥ २९ ॥
मुखे ललाटनासाढ्यं नागेन्द्रमिति संज्ञितम् ।
षड्भूमिरेवमाख्याता सप्तभूमिमथोपरि ॥ ३० ॥

इति काश्यपशिल्पे षड्भूमिविधानं त्रयस्त्रिंशः पटलः ।

---

अथ चतुस्त्रिंशः पटलः ।

सप्तभूमिः ।

अथ वक्ष्ये विशेषेण सप्तभूमेस्तु लक्षणम् ।
प्रासादमानविधिना व्यासोदयं प्रकल्पयेत् ॥ १ ॥
रव्यंशं विभजेत्तारं वेदांशं गर्भगेहकम् ।
पक्षांशं भित्तिविष्कम्भमेकेनालिन्द्रमिष्यते ॥ २ ॥
हारान्तव(र)मथांशेन परितः कल्पयेद्बुधः ।
विन्यासस्तूभयोरन्तं भान्वंशेन समं भवेत् ॥ ३ ॥
एकांशं कूटविस्तारं कोष्ठं तद्द्विगुणायतम् ।
पञ्जरव्यासमेकांशं शेषं हारान्तरं भवेत् ॥ ४ ॥
चतुष्कूटाष्टशाला च भानुपञ्जरसंख्यया ।
तस्योर्ध्वभूमिविस्तारं धर्मभागविभाजिते ॥ ५ ॥
कर्णकूटं च कोष्ठं च पूर्ववत्परिकल्पयेत् ।
पञ्जरव्यासमर्धांशं शेषं तारान्तरं भवेत् ॥ ६ ॥
तस्योर्ध्वभूमिविस्तारं धर्मभागविभाजिते ।
पञ्जरं कूटकोष्ठं च पूर्ववत्परिकल्पयेत् ॥ ७ ॥
ऊर्ध्वभूमौ नवांशे तु मध्ये शालाऽग्निभाजिते ।
व्योमांशं कर्णकूटं स्यादेकांशं पञ्जरस्तथा ॥ ८ ॥

द्वारान्तरमथार्धांशं तस्योर्ध्वे वसुभाजिते ।
मध्ये शाला द्विभागेन शेषं पूर्ववदाचरेत् ॥ ९ ॥
तदूर्ध्वभूमिविस्तारे रसभागविभाजिते ।
कूटमेकांशमित्युक्तं शाला तद्द्विगुणायता ॥ १० ॥
अर्धांशं पञ्जरव्यासं शेषं द्वारान्तरं भवेत् ।
तदूर्ध्वे भूम्य(म्व)ग्निभागैकं मध्ये दण्डेन निर्गतम् ॥ ११ ॥
सप्तषष्टी(ष्टि)तिभागं तु कर्तव्यं सदनोदयम् ।
सपादाग्निरधिष्ठानं सार्धषड्गाङ्घ्रितुङ्गकम् ॥ १२ ॥
तदर्धं मञ्चमानं तु षड्भागं चरणोदयम् ।
स्त्रीपादवद्द्विभागं तु मञ्चमानमुदाहृतम् ॥ १३ ॥
सार्धभूतांशमङ्घ्र्युच्चं सार्धद्व्यंशं तु प्रस्तरम् ।
सपादद्व्यंशभागं तु स्तम्भमानमुदाहृतम् ॥ १४ ॥
प्रस्तरं सार्धपञ्चांशं भूतांशं चरणोदयम् ।
सपादद्विभागं मञ्च स्यात्स्त्रीपादं[तु]युगांशकम् ॥ १५ ॥
चरणोदयमित्युक्तं प्रस्तरोर्ध्वं द्विभागया ।
पादोर्ध्वं सार्धवेदांशं पादोनद्व्यंशमञ्चकम् ॥ १६ ॥
व्योमांशं वेदिकोत्सेधं पादोनद्व्यंशकं गलम् ।
अर्धाधिकयुगांशं तु शिखरोदयमिष्यते ॥ १७ ॥
पञ्चांशं स्तूपिमानं तु स्यात् (त्य) सप्ततलं विदुः ।
पञ्जरं कूटकोष्ठं च समसूत्रे तु कल्पितम् ॥ १८ ॥
होमाद्याग्रयुगार्धं तु शिखरे वेदनासिका ।
शालाषड्भिर्विनिर्युक्तं भानुद्विगुणकूटकम् ॥ १९ ॥
षट्पञ्जरसंयुक्तं पादं मत्यवपनासिका ।
नानाधिष्ठानसंयुक्तमेकाकारमथापि वा ॥ २० ॥
एवेनाकृतिरङ्घ्री तु समुज्ज्वलमुदाहृतम् ।
एदेवान्तरकूटाः स्युः सान्तरप्रस्तरान्वितम् ॥ २१ ॥
श्रीच्छन्दमिति विख्यातं सर्वदेवार्हकं परम् ।
एतेन नतकूटाश्च कोष्ठेनान्ताः ( शालान्ताः कोष्ठाः ) समञ्चकाः ॥२२॥
श्रीविशालमिति स्यात् सर्वदेवप्रियावहम् ।
एतेन शीर्षकण्ठं च मञ्चाश्च वेदिका तथा ॥ २३ ॥

श्रीकान्तमिति विख्यातं कूटकोष्ठसमं तु वा ।
समं च नतकूटं स्याच्छ्रीप्रियं तदुदाहृतम् ॥ २४ ॥
तदेव वृत्तशिखरं स्तूपिं चैव गलं तथा ।
रुद्रकान्तमिति ख्यातं रुद्रप्रीतिकरं परम् ॥ २५ ॥
तदेव कर्णकूटं तु वेदाश्राष्टाश्रमण्डलम् ।
क्रमेणाऽऽदितलात्कल्प्यं वृत्तभद्रमिदं परम् ॥ २६ ॥
तदेवोन्नतकूटं च नतशालासमन्वितम् ।
कूटपञ्जरकडुचं च सुवि(ब्र)ह्ममिति विद्यते ॥ २७ ॥
सोन्नतं कूटकोष्ठं च पञ्जरोन्नतमस्तकम् ।
यथेष्टं शिखराकारं कण्ठं स्तूपियुतं तथा ॥ २८ ॥
युगाश्रं शीर्षकोपेतं कण्ठकूटं प्रकल्पयेत् ।
शिवभद्रमिति ख्यातं शिवप्रीतिकरं परम् ॥ २९ ॥
तदेव कूटकोष्ठं तु दण्डं वाऽध्यर्धदण्डकम् ।
द्विदण्डं वाऽथ निष्कान्तं भद्रं वा भद्रपञ्जरम् ॥ ३० ॥
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम् ।
नानाचित्रैर्विचित्रं तु शिवसौख्यमुदाहृतम् ॥ ३१ ॥
तदेव गर्भगेहं तु वृत्तं वाऽथ युगाश्रकम् ।
वृत्तमेवं हि वाऽग्रे तु वृत्ताभं सौष्ठिकान्वितम् ॥ ३२ ॥
शेषं पूर्ववदुद्दिष्टं नानासर्वाङ्गमण्डलम् ।
पञ्जरं कूटकोष्ठं च अन्तरप्रस्तरं विना ॥ ३३ ॥
यथेष्टं शिखराकारं शिवप्रीतिकविष्यते ।
एवं सप्ततमं(लं) ख्यातं वसुभूमिमथोपरि ॥ ३४ ॥
इति काश्यपशिल्पे सप्तभूमिविधानं नाम चतुस्त्रिंशः पटलः ।

---

अथ पञ्चत्रिंशः पटलः ।

---

वसुभूमिः ।

---

अथ वक्ष्ये विशेषेण वसुभूमिविधिं परम् ।
प्रासादमानविधिना संग्राह्यं विस्तृतोदयम् ॥ १ ॥

त्रयोदशविभागं तु कृत्वा प्रासादविस्तृतम् ।
भूतांशं गर्भगेहं तु द्विभागं भृद्दपिण्डका ॥ २ ॥
अलिन्द्रं चैकभागेन द्वार भागेन कल्पयेत् ।
अथवाऽनलभागेन गर्भगेह विधीयते ॥ ३ ॥
भागेन ग्रहपिण्डः स्यादलिन्द्र त्वेकभागया ।
कुड्यमेकेन कर्तव्यमलिन्द्र तु विनाऽश्वकम् ॥ ४ ॥
तदर्धे पञ्जरव्यास भद्र वाऽमद्रमेव वा ।
भानुकोष्ठ चतुष्कूटं कलापञ्जरसयुतम् ॥ ५ ॥
हारान्तर च द्वात्रिंशत्कल्पयेदादिभूतले ।
वर्षस्तलमलिन्द्र स्यात्मस्तरान्तघनीकृतम् ॥ ६ ॥
तदूर्ध्वभूमिविस्तृतं त्रयोदशविभाजिते ।
कूटकोष्ठादिसर्वाङ्गमादिभूमिविवैव तु ॥ ७ ॥
तस्योर्ध्वभूविशालं तु भानुभागविभाजिते ।
कर्णकूटं तदेकांशं शालाभागद्विभागया ॥ ८ ॥
अर्धांश पञ्जरव्यासं शेष हारान्तर भवेत् ।
पञ्जर कूटकोष्ठं च संख्या स्वादितलोक्तवत् ॥ ९ ॥
हारान्तरमथार्धांश लम्बपञ्जरसंयुतम् ।
तदूर्ध्वभित्रिभाग तु वसुभागविभाजिते ॥ १० ॥
कर्णकूट तदेकांशं मध्ये शाला द्विभागया ।
पञ्जरव्यासमेकांशमर्धांश हारयो(याऽ)न्तरम् ॥ ११ ॥
चतुष्कूट चतुःशूल वसुपञ्जरसंयुतम् ।
हारान्तर तथा प्रोक्त कल्पैव षट्तल भवेत् ॥ १२ ॥
तदूर्ध्वभूमिभाग तु षड्भागं विभजेत्समम् ।
कूटव्यासके(मे)ांशमित्थ मध्ये कोष्ठ द्विभागया ॥ १३
अर्धांशं पञ्जरव्यास शेष हारान्तर भवेत् ।
तदर्धं पञ्जरव्यास भद्राभद्र तु एव वा ॥ १४ ॥
भानुकोष्ठं चतुष्कूटं कपाळं ज(लान्त)रसयुतम् ।
हारान्तर च द्वात्रिंशत्कल्पयेदादिभूतल ॥ १५ ॥
वर्षस्तलमलिन्द्रं स्यात्मस्तर न्तघनीकृतम् ।
तदूर्ध्वभूमिविस्तार त्रयोदशविभाजिते ॥ १६ ॥

कूटकोष्ठादिसर्वाङ्गमादिभूमिमिवैव तु ।
तस्योर्ध्वभूविशालं तु भानुभागविभाजिते ॥ १७ ॥
कूटकोष्ठादिसर्वाङ्गं मानसंख्यादि पूर्ववत् ।
तदूर्ध्वभूदशांशे तु कूटकोष्ठं च पूर्ववत् ॥ १८ ॥
हारान्तरमथार्धांशं लम्बपञ्जरसंयुतम् ।
तदूर्ध्वभूविशालं तु वसुभागविभाजिते ॥ १९ ॥
कर्णकूटं तदेकांशं मध्ये शाला द्विभागया ।
पञ्जरव्यासमेकांशमर्धांशं हारयोत्तरम् ॥ २० ॥
चतुष्कूटं चतुःशालं वसुपञ्जरसंयुतम् ।
हारान्तरं तथा प्रोक्तं कल्पयेवं षड्तलं भवेत् ॥ २१ ॥
तदूर्ध्वभूविशालं तु षड्भागं विभजेत्समम् ।
कूटमेकांशमित्युक्तं मध्ये कोष्ठं द्विभागया ॥ २२ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
तदूर्ध्वभूविशालाद्ये मध्ये दण्डेन नीव्रकम् ॥ २३ ॥
कूटात्कोष्ठं तु नीव्रं वा मध्यशाला स्वनीव्रका ।
कूटं कोष्ठमशेषं तु समसूत्रग(श्रेण) एव वा ॥ २४ ॥
सप्ततसप्ततिभागं कृत्वा हेमसमुच्चयम् ।
सार्धत्रिंशयधिष्ठानं सप्तांशं चरणोदयम् ॥ २५ ॥
प्रस्तरं तु सपादाग्नि सार्धषट्कांघ्रितुङ्गकम् ।
सार्धद्विभागमञ्चोच्चं कल्पयेत्तु विशेषतः ॥ २६ ॥
सपादपञ्चभागं तु चरणोदयमीरितम् ।
प्रस्तरं साध्यपक्षांशं भूतांशं चरणोदयम् ॥ २७ ॥
सपादभागमञ्चं स्यात्पादं पादोनपञ्चकम् ।
मञ्चमानं द्विभागं तु सार्धं पादयुगांशकम् ॥ २८ ॥
सत्रिपादांशमञ्चोच्चं व्योमांशं वेदिकोदयम् ।
कण्ठपादेन पक्षांशं सार्धवेदांशशीर्षकम् ॥ २९ ॥
कण्ठमानं समं स्तूपितुङ्गमित्यत्र कथ्यते ।
स्तूप्यन्तं तदुपानादि वेदार्थं परिकल्पयेत् ॥ ३० ॥
अष्ट(अष्टा)श्रं च युगांशं स्यात्स्तम्भं प्रत्यल्पनासिकम् ।
शिखरं तु चतुर्नासियुक्तास्ते स्युर्महान्तराः ॥ ३१ ॥

एकाकारतलं स्तम्भं शिवच्छन्दमुदाहृतम् ।
तदेव नतशाखाः स्युर्मञ्चमाः(का:) सौष्ठिकोन्नतम् ॥ ३२ ॥
वागीशमिति विख्यातं सर्वदेवप्रियावहम् ।
चतुरश्राष्टवृत्ताभं सौष्ठिको वा पुनः पुनः ॥ ३३ ॥
विमानशिखरं कण्ठमष्टाश्रं परिकल्पयेत् ।
तदष्टभागं विख्यातं धर्मप्रीतिकरं परम् ॥ ३४ ॥
तदेव कूटकोष्ठं च सर्वंचाविमल(मञ्चं वा विम)ञ्चकम् ।
समोन्नतं तथा कूटं नानाहस्तानताङ्घ्रिकम् ॥ ३५ ॥
नानाचित्रविचित्रं तु सत्पर्वतमिति स्मृतम् ।
तदेव शिखरं कण्ठं वृत्ताभं परिकल्पयेत् ॥ ३६ ॥
नाम्ना कैलासमित्युक्तं मम प्रीतिकरं परम् ।
एवमष्टतलं ख्यातं नवभूमिमथोपरि ॥ ३७ ॥

इति काश्यपशिल्पे वसुभूमिविधानं पञ्चत्रिंशः पटलः ।

---

अथ षट्त्रिंशः पटलः ।

---

## नवभूमिः ।

---

अथ वक्ष्ये विशेषेण नवभूमिविधिं परम् ।
प्रासादमानवत्कार्यं गेहस्य लक्षणं वरम् ॥ १ ॥
एकांशं विभजेत्तार गुणांशं गर्भगेहकम् ।
द्विभागा गृहपिण्डी स्यादलिन्द्रं त्वेकभागतः ॥ २ ॥
व्योमांशं कुड्यविस्तारमलिन्द्रं तत्समं भवेत् ।
हारं(?)व्यासं शिवांशेन कल्पयेत्कल्पवित्तमः ॥ ३ ॥
अथवा षोडशांशं तु प्रासादं विभजेत्समम् ।
युगांशं गर्भगेहं तु द्विभागा गृहपिण्डिका ॥ ४ ॥
अलिन्द्रं तु शिवांशेन व्योमांशं कुड्यविस्तृतम् ।
अलिन्द्रं व्योमभागेन हारान्तं तु तत्समम् ॥ ५ ॥
विन्याससूत्रयोरन्तः कर्णांशं विभजेत्समम् ।
एकांशं सौष्ठिकं व्यासं थोष्टुं तद्द्विगुणायतम् ॥ ६ ॥

पञ्जरव्यासमेकांशमेकांशं कूटमानकम् ।
हारान्तरं च द्वात्रिंशत्कल्पयेदादिभूतले ॥ ७ ॥
एवमेव प्रकर्तव्यं द्वितीयं च महीतलम् ।
तृतीयमहीतलस्या(यभूतलाया)मं मनुभागाविभाजिते ॥ ८ ॥
अर्धांशं पञ्जरव्यासं शेषं पूर्ववदाचरेत् ।
तद्वच्चतुस्तलं चैव कल्पयेद्देशिकोत्तमः ॥ ९ ॥
पञ्चभूमिविभागं तु भानुभागविभाजिते ।
एकांशं कूटविस्तारं-शाला तद्द्विगुणायता ॥ १० ॥
अर्धांशं पञ्जरव्यासं तस्यार्धं हारयोत्तरम् ।
भानुशाला च कूटाभं पञ्जरं षोडशैव तु ॥ ११ ॥
तदूर्ध्वभूविशालं तु वसुभागविभाजिते ।
एकांशं सौष्ठिकव्यासं मध्ये भागद्विशालया ॥ १२ ॥
पञ्जरव्यासमेकांशमर्धांशं हारयोत्तरम् ।
तदूर्ध्वभूविशालं तु रसभागविभाजिते ॥ १३ ॥
एकांशं कूटविस्तारं कोष्ठं तद्द्विगुणायतम् ।
पञ्जरव्यासमर्धांशं शेषं हारान्तरं भवेत् ॥ १४ ॥
तदूर्ध्वं भूविशालं तु गुणभागविभाजिते ।
मध्यांशं दण्डमानेन निर्गमं परिकल्पयेत् ॥ १५ ॥
साष्टविंशतिभागं तु कृत्वा देहा(गेहो)दये बुधः ।
पादोनचतुरंशं तु धरातलमिति स्मृतम् ॥ १६ ॥
पा ोच्चं सार्धसप्तांशं सार्धाग्न्यंशं तु प्रस्तरम् ।
सप्तांशं चरणोच्चं तु सपादाग्न्यंशमंघ्रा(मञ्च)कम् ॥ १७ ॥
सार्धषट्काङ्घ्रितुङ्गं तु गुणांशं मञ्चमानकम् ।
षड्भागं पादमानं तु पादोनाग्न्यंशमञ्चकम् ॥ १८ ॥
पादोच्चं सार्धभूतांशं सार्धपक्षांशमञ्चकम् ।
सपादपञ्चभागं तु पादोत्सेधं समुच्यते ॥ १९ ॥
प्रस्तरं सार्धपक्षांशं भूतांशं चरणोदयम् ।
पादाधिक्यं द्विभागं तु प्रस्तरस्योदयं भवेत् ॥ २० ॥
पादोनपञ्चकं पादं प्रस्तरोच्चं द्विभागया ।
सार्धवेदांशकं पादं पादोनद्व्यंशमञ्चकम् ॥ २१ ॥

शिखांशं वेदिकोत्सेधं कण्ठं चाप्यर्धभागया ।
शीर्षं सपादवेदांश पादोनद्व्यंशादं(सं)शिखम् ॥ २२ ॥
पादं मत्यल्पनासाढ्यं शिखरं वेदनासिकम् ।
समं च नतकूटाढ्यं कूटाढ्यं चतुरश्रकम् ॥ २३ ॥
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ।
अशेषं मध्यशालं तु पार्श्वकोष्ठं तु निर्गतिः ॥ २४ ॥
दण्डं वाऽध्यर्धदण्डं वा नाम्ना ललितभद्रकम् ।
तद्देशोन्नतकोष्ठाः स्युः समं च नतभद्रकम् ॥ २५ ॥
ब्रह्मकान्तमिदं नाम्ना सर्वदेवप्रियावहम् ।
समश्रं वाऽपि(प्य)श्रं वा कूटकोष्ठसमन्वितौ(तम्) ॥ २६ ॥
प्रादेशमिति विख्यातं सर्वदेवप्रियावहम् ।
तदेव शिखरं कण्ठं वस्वभं (श्रं) चाष्टनासिकम् ॥ २७ ॥
युगाश्रं वसुकोणं वा वृत्तं वा सौष्ठिकं पुनः ।
सौम्यशेषं युगाश्रं स्याच्छ्रीवर्धनमिदं परम् ॥ २८ ॥
समश्रौ कूटकोष्ठौ द्वौ विमुखौ साध(भश्रौ वाऽथ)सदृशौ ।
वृत्ताश्रव(य)शिरोपेतं चतुर्दिग्भद्रनासिकम् ॥ २९ ॥
विदिक्षु युग्मनासाढ्यं युग्मसा(ग्मंवाऽ)युग्ममेव वा ।
युग्मं पञ्जरसंयुक्तं सुपद्ममिति विद्यते ॥ ३० ॥
तदेव वृत्तसौष्ठ्यग्रं कृतवर्धनमुच्यते ।
तदेव गर्भगेहं तु वृत्तं वृत्तगृहं भवेत् ॥ ३१ ॥
एवं नवतन्तु(लं) ख्यातं दशभूमिमथोपरि ॥ ३२ ॥

इति काश्यपशिल्पे नवभूमिविधानं षट्त्रिंशः पटलः ।

---

अथ सप्तत्रिंशः पटलः ।

---

## दशभूमिलक्षणम् ।

---

अथ वक्ष्ये विशेषेण दशभूमेस्तु लक्षणम् ।
पार्श्वशालादमानोक्तप्रमाणैर्वोदयं नवम् ॥ १ ॥

कल्पयित्वा तु तत्तारं मनुभागविभाजिते ।
वेदांशं गर्भगेहं तु गृहपिण्डी त्रिभागया ॥ २ ॥
अलिन्द्रं त्वेकभागेन हारान्तरं शिवांशकम् ।
विन्याससूत्रयोरन्तर्मनुभागविभाजिते ॥ ३ ॥
तेष्ठे(ष्वे)कं कूटविस्तारं था(शा)लादीर्घं तु तद्द्वयम् ।
एकांशं पञ्जरं व्यासं पादं हारान्तरं भवेत् ॥ ४ ॥
चतुष्कूटं चतुःशालं पञ्जरं षोडशान्वितम् ।
हारान्तरं च द्वात्रिंशत्कल्पयेदादिभूतले ॥ ५ ॥
तदूर्ध्वभूमिविस्तारं त्रयोदशविभाजिते ।
एकांशं कण्ठकूटं तु शाला तद्द्विगुणायता ॥ ६ ॥
एकांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
ऊर्ध्वभूविस्तृतं मानुभागं कृत्वाऽशसौष्ठिकम् ॥ ७ ॥
द्विगुणं कोष्ठदीर्घं तु अर्धांशं पञ्जरस्ततम् ।
पादं हारान्तरं व्यासं तेषां संख्यादिपूर्ववत् ॥ ८ ॥
तस्योर्ध्वतलविस्तारं रुद्रभागविभाजिते ।
पादपञ्जरविस्तारं शेषं पूर्ववदेव हि ॥ ९ ॥
तदूर्ध्वभूदशांशे तु व्योमांशं कूटविस्तृतम् ।
कोष्ठं तद्द्विगुणायामं शेषं हारान्तरं भवेत् ॥ १० ॥
हारान्तरं त्रिभागैकं पञ्जरव्यासमुच्यते ।
तस्योर्ध्वभूनवांशे तु शिवांशं सौष्ठिकं भवेत् ॥ ११ ॥
हारान्तरं द्विभागैकं पञ्जरव्यासमुच्यते ।
तस्योर्ध्वभूनवांशे तु शिवांशं सौष्ठिकं भवेत् ॥ १२ ॥
अत्यर्धांशं तु कोष्ठं स्याच्छेषं हारान्तरं समम् ।
हारान्तरं द्विभागैकं पञ्जरव्यासमुच्यते ॥ १३ ॥
भास्वरसंख्यारुद्रांशं सभूमिरेवमेव हि ।
अष्टांशं विभजेत्सप्ततलविस्तारमेव हि ॥ १४ ॥
कूटमेकांशमानेन मध्ये शाला द्विभागया ।
पञ्जरव्यासमेकांशं हारान्तरं तदर्धकम् ॥ १५ ॥
चतुष्कूटं चतुःशालं पञ्जराष्टकसंयुतम् ।
हारान्तरं कलासंख्यां कल्पयेवं सप्तकं तलम् ॥ १६ ॥

सप्तांशं विभजेदष्टमत(ध)श्चैव तु विस्तरम् ।
मागवत्कूटं च कोष्ठं च शेषं हारान्तरं तथा ॥ १७ ॥
.... .... ...मग्निभागैकविस्तृतम् ।
नवभूमिविशालं तु षड्भागं विभजेत्समम् ॥ १८ ॥
मागवत्कूटं च कोष्ठं च पञ्जा(ञ्ज)रं च प्रकल्पयेत् ।
तदूर्ध्वे भूमिविस्तारमनलांशविभाजिते ॥ १९ ॥
मध्ये भद्रं तदेकांशं दण्डमास्यति(नेन) निर्गतिः ।
प्रासादस्य तु चोत्सेधं शतभागविभाजिते ॥ २० ॥
युगांशं तदधिष्ठानमष्टांशं चरणायतम् ।
पादोनवेदभागं तु मञ्चमानमुदाहृतम् ॥ २१ ॥
पादोर्ध्वं सार्धसप्तांशं मस्तरं सार्धवालिकम् ।
धारवंशं चरणोर्ध्वं तु सपादाग्न्यंशमञ्चकम् ॥ २२ ॥
सार्धषट्काङ्घ्रितुङ्गं तु मस्तरं चाग्निभागया ।
रसांशं पाददीर्घं तु पादोनाग्न्यंशमञ्चकम् ॥ २३ ॥
पादोर्ध्वं सार्धपञ्चांशं सार्धपक्षांशमञ्चकम् ।
पादाधिकं तु पञ्चांशं पादस्योत्सेधमुच्यते ॥ २४ ॥
सार्धपक्षांशमञ्चोर्ध्वं पञ्चांशं पाददैर्घ्यकम् ।
पादाधिकं तु पक्षांशं मञ्चमानमुदाहृतम् ॥ २५ ॥
सत्रिपादयुगांशं तु पाददैर्घ्यमुदाहृतम् ।
मस्तरोर्ध्वं द्विभागं तु सार्धवेदांशम(म)ङ्घ्रिकम् ॥ २६ ॥
पादोनद्व्यंशमञ्चः स्यात्पञ्च भागं वितर्दिका ।
तदेवोन्नतकूटादि नरकान्तमिति स्मृतम् ॥ २७ ॥
कण्ठमष्टपर्धभागेन शीर्षकं सार्धवेध(द)कम् ।
पादहीनद्विभागं तु स्तूप्युत्सेधमुदाहृतम् ॥ २८ ॥
अग्राकारं युगाश्रं तु शिखरे युगनासिका ।
पादं मत्स्यस्पनासाढ्यं नानापादधरातलम् ॥ २९ ॥
अत्यन्तकान्तमित्युक्तं सर्वदेवप्रियावहम् ।
तदेवोन्नतकोष्ठं च नतं चोन्नतसौष्ठिकम् ॥ ३० ॥
पक्षशाला तु मध्यस्थं शालादण्डेन नीव्रकम् ।
अष्टाश्रं शिखरं कण्ठं शिखरं चाष्टनासिकम् ॥ ३१ ॥

नानालंकारसंयुक्तं चतुष्कूटमिदं परम् ।
तदेव कूटकोष्ठं च नान्तरप्रस्तरं परम् ॥ ३२ ॥
कूटकोष्ठादिसर्वाङ्गं समसूत्रमथार्पितम् ।
मन्त्रपूतमिति ख्यातं विमानं सर्वकामिकम् ॥ ३३ ॥
तदेव शिखरं कण्ठवृत्ताभं परिकल्पयेत् ।
नात्र(त्रा) कान्तमिति ख्यातं सर्वदेवार्हकं गृहम् ॥ ३४ ॥
तदेव कर्णकण्ठानां शीर्षकं च गलं तथा ।
वृत्ताकारं प्रकर्तव्यं यत्तदीश्वरकान्तकम् ॥ ३५ ॥
दशभूभागमाख्यातं तन्त्रस्त्वेकादशातलम् ॥ ३६ ॥

इति काश्यपशिल्पे दशभूमिविधानं सप्तत्रिंशः पटलः ।

---

अथाष्टात्रिंशः पटलः ।

---

रुद्रभूमिः ।

---

अथ वक्ष्ये विशेषेण रुद्रभूमिविधानकम् ।
प्रासादमानविधिना संग्रहेत्तु ततोदयम् ॥ १ ॥
तिर्यगंशं विभजेत्तारं गुणांशं गर्भगेहकम् ।
पक्षांशा गृहपिण्डी स्यादलिन्द्रं त्वेकभागया ॥ २ ॥
एकांशं कुड्यविस्तारमलिन्द्रं तु शिवांशकम् ।
हारान्तरमथांशेन कल्पयेत्तु यथाक्रमम् ॥ ३ ॥
अलिन्द्रं वा घना भित्तिरथापि वा । (?)
प्रस्तरान्तं घनं वाऽपि तदूर्ध्वेऽलिन्द्रमेव वा ॥ ४ ॥
विन्यासभूम्योरन्तर्व्यासः पक्षांशभाजिते ।
शिवांशं कर्णकूटं स्यात्पक्षशाला द्विभागया ॥ ५ ॥
मध्यशालाऽग्निभागा स्यादर्धांशं प(प)ञ्जरं भवेत् ।
हारान्तरं च तत्तुल्यं कल्पयेत्तु द्वादिभूतले ॥ ६ ॥
तदूर्ध्वभूविशाले तु मनुभागविभाजिते ।
शिवांशं कूटविस्तारं कोष्ठं तद्द्विगुणायतम् ॥ ७ ॥

शेषं हारान्तरं स्यात त्रिभागैकमपञ्जरम् ।
पञ्जरं कूटकोष्ठं च सख्या वै भागिकैन तु ॥ ८ ॥
तदूर्ध्वभूमिविस्तारं रुद्रांश तु द्विभाजिते ।
पञ्जरं कूटकोष्ठं च भागैकेन प्रकल्पयेत् ॥ ९ ॥
तस्योर्ध्वभूमिविस्तार दशभागविभाजिते ।
कूटं चैव तु कोष्ठं च कुर्यामान च पूर्ववत् ॥ १० ॥
तदूर्ध्वभूनवांशे तु कूटव्यास शि ागकम् ।
अल्पधांश तु कोष्ठाया(ना) शेषं हारान्तर भवेत् । ११ ॥
हारान्तर त्रिभागैक पञ्जरव्यासमुच्यते ।
मागूर्ध्वकूटाद्यसख्याः स्युः कल्पयेत्कल्पवित्तमः ॥ १२ ॥
अष्टांश विभजेदिष्टभूमेश्चैव तु विस्तरम् ।
कूटविस्तारमेकांश म े शाला द्विभागया ॥ १३ ॥
पञ्जर व्यासमेकांश हारान्त च तदर्धकम् ।
चतुष्कूट चतु शाल पञ्जराष्टकसयुतम् ॥ १४ ॥
हारान्तर कला सख्या षोडशैतेष्वलानिवतौ(ते) ।
नवभूमिविशाल तु सप्तधा विभजत्क्रमम् ॥ १५ ॥
कूटव्यासमथांशेन कोष्ठ वि द्विभागया ।
शेष हारान्तर स्यात तत्त्रिभागेन पञ्जरम् ॥ १६ ॥
दशभूमिविशाल तु रसभागविभाजिते ।
मागवत्कूट च कोष्ठ च पञ्जर च प्रकल्पयेत् ॥ १७ ॥
प्रथमा(एका)दिपञ्चभूम्यन्त भद्रपञ्जरसयुतम्
पञ्जर भूपविष्टात्तु भद्र वा भद्रपञ्जरम् ॥ १८ ॥
ऊर्ध्वभूमिविशाल तु गुणभागविभाजिते ।
मध्यभद्र तदेकांशं दण्डमानेन निर्गतिः ॥ १९ ॥
प्रासादस्य तु चोत्सेध शतांशं च त्रयोदश ।
कृ वा सार्ध युगांश तु धरातलमुदाहृतम् ॥ २० ॥
पादोच्च सार्धवस्वंशं मञ्चमान युगांशकम् ।
वस्वंश चरणायाम पादोन वंशु(च युगांशकम्) ॥ २१ ॥
चरण सार्धसप्तांश प्रस्तर सार्धयुग्मकम् ।
सप्तांशं पाददीर्घ [illegible] ग ादांशकमश्वकम् ॥ २२ ॥

अर्धाधिकं षडंशं तु पादोच्चाग्रिस्तु मञ्चकम्।
षडंशं पादतुङ्गं तु पादोनत्रिंशमञ्चकम् ॥ २३ ॥
सत्रिपादं तु भूतांशं पाददीर्घमुदाहृतम्।
अर्धाधिकाद्विभागं तु प्रस्तरस्योदयं भवेत् ॥ २४ ॥
सपादपञ्चभागं तु पादोदयमुदाहृतम्।
सार्धपञ्चांशमञ्चोच्चं भूतांगं चरणोदयम् ॥ २५ ॥
सपादपञ्चभागं तु मञ्चमानमुदीरितम्।
पादोनपञ्चभागं तु चरणोदयमीरितम् ॥ २६ ॥
मञ्चमानं द्विभागं स्यात्सार्धवेदांशमङ्घ्रिकम्।
सत्रिपादाग्निरंशं तु प्रस्तरस्य समुच्चकम् ॥ २७ ॥
दशांशं वेदिकामानं कण्ठोच्चं सार्धभागया।
अर्धाधिकं तु वेदांशं शिखरोदयमिष्यते ॥ २८ ॥
पादोनं तु द्विभागं स्यात्स्तूपेरुदयमिष्यते।
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ॥ २९ ॥
शिखरे तु चतुर्दिक्षु महानासीसमन्वितम्।
पदं मरयरपनासाढ्यं ब्रह्मकान्तं तदुच्यते ॥ ३० ॥
सौष्ठिकं सान्तरं मश्चं विजयं तदुदाहृतम्।
तदेव भद्रकूटं च कोष्ठानश्चा(चान्ताः कोष्ठाः)समञ्चकाः ॥३१॥
सर्वार्हकमिदं ख्यातं सर्वदेवार्हकं परम्।
तदेव शिखरं कर्णं वृत्तमष्टांशवेदिका ॥ ३२ ॥
इन्द्रकान्तमिति ख्यातं सर्वदेवार्हकं परम्।
तदेव मध्यभद्राढ्यं कूटकोष्ठौ समौ ततौ ॥ ३३ ॥
समश्चं वा विमश्चं वा कूटशाला च पञ्जरम्।
गणिकानालकं प्रोक्तं ब्रह्मविष्णुशिवार्हकम् ॥ ३४ ॥
तदेव शिखरं कर्णं वृत्तमष्टाश्रिवेदिकम्।
इन्द्रकान्तमिति ख्यातं विमानं सर्वदैविकम् ॥ ३५ ॥
तदेव कर्णकूटं तु भद्रयुक्तार्धकूटकम्।
तदेव सौष्ठिकानां तु नीपैकं मण्डपाकृति ॥ ३६ ॥

नाम्ना कर्णविशालं तु सर्वदेवप्रियं गृहम् ।
एवमेकादशभूमिलक्षणं परिकीर्तितम् ॥ ३९ ॥

इति काश्यपशिल्पे रुद्रभूमिविधानमष्टात्रिंशः पटलः ।

---

अथैकोनचत्वारिंशः पटलः ।

---

## भानुभूमिः ।

---

अथ वक्ष्ये विशेषेण भानुभूमिविधिं परम् ।
हर्म्यविस्तारतुङ्गं च प्रोक्तं प्रासादमानकम् ॥ १ ॥
ससप्तधर्मभागं तु कृत्वा प्रासादविस्तरम् ।
तदेव सौष्ठिकानां तु शीर्षकं कुण्डलाकृति ॥ २ ॥
भूताङ्गं गृह(गर्भ)गेहं तु पक्षांशं गृहपिण्डिका ।
अलिन्द्रं स्वैकभागेन कुड्यमर्श(र्धा)शमानतः ॥ ३ ॥
अलिन्द्रं तु शिवांशं स्याद्द्वारभागेन कल्पयेत् ।
अथवा गर्भगेहं तु गुणांशेनैव कारयेत् ॥ ४ ॥
गर्भगेहस्य तुल्यं स्याद्गृहपिण्ड्यास्तु विस्पृ(स्तृ)तम् ।
शेषं प्रागिव कर्तव्यमलिन्द्रं कुड्यशरया ॥ ५ ॥
विन्याससूत्रयोरन्तः सप्तदशविभाजिते ।
गुणांशं मध्यशाला स्यात्कर्णकूटं शिवांशकम् ॥ ६ ॥
तयोर्मध्ये तु पक्षांशं शालादिव्यमुदाहृतम् ।
कूटकोष्ठान्तरे चैव कोष्ठयोरन्तरेऽपि ■ ॥ ७ ॥
शिवांशं पञ्जरव्यासं कर्णकूटमिवाकृतिम् ।
हारान्तरं तदूर्ध्वांशं क्षुद्रपञ्जरसंयुतम् ॥ ८ ॥
एवमादितलं कुर्यादूर्ध्वे रुद्रतलोक्तवत् ।
सप्तविंशं च तं भागं कृत्वा हर्म्योदयं द्विज ॥ ९ ॥
धा(ध)रातलांशं भूतांशं नत्रांशं चरणोदयम् ।
सार्धवेदां(वेदा)शं मञ्चोर्ध्वं शेषं रुद्रतलोक्तवत् ॥ १० ॥

एवं भानुतलं प्रोक्तं त्रयोदशतलं शृणु ॥ ११ ॥

इति काश्यपशिल्पे भानुभूमिविधानमेकोनचत्वारिंशः पटलः।

---

अथ चत्वारिंशः पटलः।




---

त्रयोदशभूमिः।

---

अथ वक्ष्ये विशेषेण त्रयोदशतलं परम्।
तस्य विस्तारमानं स्य(तु) प्रासादमानवद्भवेत् ॥ १ ॥
एकोनविंशदं[शं] तु कर्तव्यं सदनं स्त(त)रम्।
गुणांशं गर्भगेहं तु पक्षांशं गृहपिण्डकम् ॥ २ ॥
अलिन्द्रं च शिवांशं स्याद्भित्तिः स्याद्गुणतं समम्।
अलिन्द्रं त्वेकभागेन भित्तिव्यासं शिवांशकम् ॥ ३ ॥
व्योमभागमलिन्द्रं स्याद्धाराव्यासं च तत्समम्।
विन्याससूत्रयोरन्तरेकोनविंशदंशके ॥ ४ ॥
शिवांशं कर्णकूटं स्यान्मध्ये शालाऽग्निभागया।
पक्षशाला च तत्तुल्यमेकांशं पञ्जरस्य तु ॥ ५ ॥
हारान्तरमथार्धांशं क्षुद्रपञ्जरसंयुतम्।
पञ्जरं कर्णकूटाभं तस्या(दा)पक्षुद्रपञ्जरम् ॥ ६ ॥
एवमादितलं प्रोक्तमूर्ध्वं भानुतलोक्तवत्।
चत्वारिंशद्द्वयाधिक्ये शतांशे सदनोत्सुके ॥ ७ ॥
पञ्चांशं तदधिष्ठानं दशांशं चरणोदयम्।
भूतांशं मञ्चमानं स्याच्छेषं द्वादशभूमिवत् ॥ ८ ॥
त्रयोदशतलं ह्येवं कलाभूमिमथोपरि ॥ ९ ॥

इति काश्यपशिल्पे त्रयोदशभूमिविधानं नाम चत्वारिंशः पटलः।

---

अथैकचत्वारिंशः पटलः ।

---

## षोडशभूमिः ।

---

अथ षोडशभूमिस्तु वक्ष्यते द्विजसत्तम ।
एवं क्रमेण संकल्प्य पञ्चालिन्द्रसमन्वितम् ॥ १ ॥
पञ्चहारसमायुक्तं गृहपिण्डे समानकम् ।
गर्भगेहं रमांशं च वेदांशं गृहपिण्डिका ॥ २ ॥
शेषं पूर्ववदुद्दिष्टमलिन्द्रादि द्विजोत्तम ।
एकद्वित्रिचतुष्पञ्च भूमौ चाऽथ धरातले ॥ ३ ॥
देवतास्थापनं कुर्यात्षोडशस्थलहर्म्यके ।
देवतास्थापनं भूमिपर्यावसानकं कुरु ॥ ४ ॥
बाह्योऽलिन्द्रे चित(ह्यालिन्द्रे अ)न्धकार वनमत्यन्तर कुरु ।
अलिन्द्रजलनिरणाच्छादिनं वा तुलादिभिः ॥ ५ ॥
प्रस्तरान्तर्गतं चाऽथ भान्ते बालाद्यु तद्घनम् ।
व्यासे सप्तत्रिंशांशे कर्णकूटं शिवांशकम् ॥ ६ ॥
हर्म्यमध्ये तु वेदांशं शालायाममुदाहृतम् ।
तयोर्मध्ये तु पञ्चांशे स्यात्तु र(शेऽष्टतुङ्गं) परिकल्पयेत् ॥ ७ ॥
तयोर्मध्ये शिवांशेन पञ्जरं कर्णकूटवत् ।
हारान्तरं तयोर्मध्येद(ध्ये अ)र्धांशेनैव कल्पयेत् ॥ ८ ॥
एवं हि कल्पयेद्द्वादिभ्यां शालाष्टविंशतिः ।
कर्णकूटं तु वेदासु (दांश) द्वात्रिंशं पञ्जरं भवेत् ॥ ९ ॥
सोऽष्टपश्चिमस्थाः स्युर्द्वा(र्म्यं स्याद्द्वा)रान्तरं द्विजोत्तम ।
गर्भादितलं स्यात्तद्धि द्वात्रिंशदङ्गके ॥ १० ॥
द्विभागं मध्यशाला स्याच्छेषं पूर्ववदाचरेत् ।
द्वितीयं हीनमास्थाय तृतीयमधुनोच्यते ॥ ११ ॥
त्रिंशद्दशद्विभागं तु कृत्वा भागमि(नं त्रि) भूमिकम् ।
कर्णकूटस्य पार्श्वस्थं पञ्जरं त्वर्धभागया ॥ १२ ॥
हारान्तरं तदर्धं स्याच्छेषं त्रितयभूमिवत् ।
चतुर्भूमिविशालं तु साष्टाद्विंशतिभागया ॥ १३ ॥

कर्णकूटमथोपर्ये शालायास्तु द्विपार्श्वयोः।
एकांशं पञ्जरव्यासं शेषं भागेन कल्पितम् ॥ १४ ॥
पञ्चमे तलविस्तारे षड्विंशत्यंशभाजिते।
मध्ये शाला तु वेदांशं व्योमांशं कर्णकूटकम् ॥ १५ ॥
तयोर्मध्यस्त(स्थ)शाला च तयोर्मध्ये च कोष्ठकम्।
प्रत्येकं च द्विभागेन कल्पयेत्तत्त्ववित्तमः ॥ १६ ॥
तयोर्मध्येऽर्धभागेन पञ्जरं कर्णकूटकम्।
हारान्तरं तदर्धेन तेषां संख्याऽऽदिभूमिवत् ॥ १७ ॥
षष्ठं च भूमिविस्तारं चतुर्विंशतिभाजिते।
मध्ये कोष्ठं द्विभागेन शेषं पूर्ववदेव हि ॥ १८ ॥
सप्तभूमि(मे)स्तु विस्तारं द्वात्रिंशत्यंशकं भवेत्।
शिवांशं कर्णकूटं तु मध्यशाला द्विभागया ॥ १९ ॥
तयोर्मध्ये शिवांशेन क्षुद्रकोष्ठं प्रकल्पयेत्।
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम् ॥ २० ॥
अर्धांशं पञ्जरव्यासं तदर्धं हारगोचरम्।
पञ्जरं कूटकोष्ठं च संख्या वै प्रागिवैव तु ॥ २१ ॥
अष्टमं भूमिविस्तारं विंशत्यंशद्वि(त्रि)भाजिते।
व्योमांशं कर्णकूटं स्यान्मध्ये कोष्ठं द्विभागया ॥ २२ ॥
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम्।
अर्धांशं पञ्जरव्यासं तदर्धं हारगोचरम् ॥ २३ ॥
पञ्जरं कूटकोष्ठं च संख्या स्यात्प्रागिवैव तु।
अष्टमं भूमिविस्तारं विंशत्यंशद्वि(त्रि)भाजिते ॥ २४ ॥
व्योमांशं कर्णकूटं स्यान्मध्ये कोष्ठं द्विभागया।
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम् ॥ २५ ॥
तयोर्मध्ये शिवांशेन क्षुद्रकोष्ठं प्रकल्पयेत्।
शेषं प्रागिव कर्तव्यं तेषां संख्यादि पूर्ववत् ॥ २६ ॥
नवभूमिविशालं तु त्रिःषडंशविभाजिते।
शिवांशं कर्णकूटं स्यान्मध्ये शाला द्विभाजिता ॥ २७ ॥
तयोर्मध्येऽर्धभागेन पञ्जरं परिकल्पयेत्।
तदर्धेनैव तत्पार्श्वे तयोहा(र्हा)रान्तरं भवेत् ॥ २८ ॥

तत्पार्श्वयोर्द्विभागं स्यात्कोष्ठं कुर्याद्विशेषतः ।
कूटकोष्ठान्तरं चैव कोष्ठयोरन्तरेऽपि च ॥ २९ ॥
पञ्जरं कल्पयेद्धीमानर्धांशेनैव सुव्रत ।
द्वारान्तरं तदर्धांशं कल्पयेत्कल्पवित्तमः ॥ ३० ॥
विंशत्कोष्ठं चतुष्कूटं पञ्जरं भानुभिर्द्वयम् ।
अ(क)ल्पयेवं नवभूमौ तु दशभूमिम(र)थोच्यते ॥ ३१ ॥
दशभूमेस्तु विस्तारं षोडशांशविभाजिते ।
कर्णकूटं शिवांशं स्यच्चत्सम पञ्जरस्तरम् ॥ ३२ ॥
शालायामं द्विभागं स्यादर्धांशं द्वारगोचरम् ।
भानुशालाचतुष्कूटं कलापञ्जरसंयुतम् ॥ ३३ ॥
द्वारान्तरं तु द्वात्रिंशत्कल्पयेद्दशमे तले ।
एकादशतलव्यासं मनुभागविभाजिते ॥ ३४ ॥
शिवांशं कर्णकूटं तु मध्ये शाला द्विभागया ।
तयोर्मध्यस्थशालानां गुणांशं परिकल्पयेत् ॥ ३५ ॥
अर्धांशं पञ्जरव्यासं तस्यार्धं द्वारगोचरम् ।
चतुष्कूटार्कशाला च पञ्जरं षोडशान्वितम् ॥ ३६ ॥
द्वारान्तरं च द्वात्रिंशत्कल्प्यं रुद्रतलेऽपि च ।
भानुभूमिविशालं तु भानुभागविभाजिते ॥ ३७ ॥
पञ्जरं कूटकोष्ठं च संख्या रुद्रतले तु वत्(वा) ।
सर्वेषामपि कोष्ठानां पक्षांशं मविधीयते ॥ ३८ ॥
त्रयोदशतलव्यासं दशभागविभाजिते ।
कर्णकूटं शिवांशेन मध्ये शाला द्विभागया ॥ ३९ ॥
तयोर्मध्येऽर्धभागेन पञ्जरं कर्णकूटवत् ।
द्वारान्तरं च तस्यार्धं संख्या द्वादशभूमिवत् ॥ ४० ॥
चतुर्दशतलव्यासो मनुभागविभाजिते ।
शिवांशं कर्णकूटं स्यान्मध्ये शाला द्विभागया । ४१ ॥
अर्धांशं पञ्जरव्यासं तयोर्मध्ये द्वारगोचरम् ।
चतुष्कूटं चतुःशालं पञ्जरं षोडशान्वितम् ॥ ४२ ॥
द्वारान्तरं चतुर्विंशत्कल्प्यैवं तु म(ह)नुत्तमम् ।
षिःपञ्चभूमिषड्भागविस्तारं द्वि(त्रि)भजेत्समम् ॥ ४३ ॥

कर्णकूटं तु व्योमांशं मध्ये शाला द्विभागया ।
हारान्तरं तु शर्यंशं युग्मपञ्जरसंयुतम् ॥ ४४ ॥
अधोपोर्ध्वेतलव्यासो वेदभागविभाजिते ।
द्विभागविस्तृतं दण्डमानं नीव्रं तु मध्यमे ॥ ४५ ॥
कृत्वा प्रासादतुङ्गं तु द्विभागेन शतद्वयम् ।
धरातलं तु सप्तांशं चरणं च त्रयोदश ॥ ४६ ॥
सार्धपञ्च तु मञ्चोच्चं पादोच्चं भानुसंख्यया ।
प्रस्तरोच्चं तु षड्भागं रुद्रांशं चरणोदयम् ॥ ४७ ॥
सार्धभूतांशमञ्चं स्याद्दशांशं चरणोदयम् ।
भूतांशं मञ्चमानं तु नवांशं चरणोदयम् ॥ ४८ ॥
सार्धवेदांशमञ्चोच्चं कल्पयेत्कल्पवित्तमः ।
पादोच्चं सार्धवस्वंशं मञ्चमानं युगांशकम् ॥ ४९ ॥
वस्वंशं चरणोच्चं तु मच(ञ्च)मानोदितं युत(ग)म् ।
चरणं सार्धसप्तांशं प्रस्तरं सार्धवन्हि(ह्नि)कम् ॥ ५० ॥
सप्ताग्निपाददीर्घं तु पादाधिक्याग्निमञ्चकम् ।
अर्धाधिकं षडंशं तु पादोनाग्निस्तु मञ्चकम् ॥ ५१ ॥
षडंशं पादमानं तु पादोनाग्न्यंशमञ्चकम् ।
अर्धाधिकं तु भूतांशं पाददैर्घ्यमुदाहृतम् ॥ ५२ ॥
अर्धाधिकं द्विभागं तु प्रस्तरस्योदयं भवेत् ।
सपादपञ्चभागं तु पाददीर्घमुदाहृतम् ॥ ५३ ॥
सार्धपक्षांशमञ्चोच्चं भूतांशं चरणायतम् ।
सपादपक्षभागं तु मञ्चमानमुदीरितम् ॥ ५४ ॥
पादोनपञ्चभागं तु चरणोदयमीरितम् ।
पञ्चभागं द्विभागं स्यात्सार्धवेदांशमङ्घ्रिकम् ॥ ५५ ॥
सत्रिपानाशिवांशं तु प्रस्तरस्य समुच्छ्रयम् ।
शश्यं(श्यं)शं वेदिकामानं कण्ठोच्चं तद्द्विभागया ॥ ५६ ॥
अर्धाधिकयुगांशं तु शिखरोदयमीरितम् ।
सपादांशं शिखामानं कल्पयेत्तु क्रमेण च ॥ ५७ ॥
हेमादि स्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ।
शिखरे तु चतुर्दिक्षु महानासीसमन्वितम् ॥ ५८ ॥

पादं मस्यल्पनासाढ्यं अधिष्ठानं मुदाहृतम् ।
तदेव सोपानं मञ्चं सोष्ठिकोपेतं कोष्ठरम् ॥ ५९ ॥
सारस्वतमिदं ख्यातं शिवप्रियकरं गृहम् ।
तदेव नतकूटं च कोष्ठं नतसमन्वकम् ॥ ६० ॥
मादेशमिति विख्यातं सर्वेषु(षां स)मृद्धिकारणम् ।
तदेव शिखरं कण्ठं घस्रार्थं परिकल्पयेत् ॥ ६१ ॥
शिखरे पृष्ठ(ष्ठ)महानासीयुक्तं तच्छोरं भवेत् ।
तदेव मध्यभद्राढ्यं कूटकाष्ठौ समोन्नतौ ॥ ६२ ॥
समश्रो वा व्यमश्रो वा कूटशालो द्विजोत्तम ।
पार्वतीकमिदं ख्यातं मम प्रीतिकरं भवेत् ॥ ६३ ॥
तदेव शिखरं कण्ठं वृत्तमष्टाश्रवेदिरम् ।
वेदिकाश्रेन वृत्ता वा वृत्ताकारमथाऽपि वा ॥ ६४ ॥
सुखावहमिदं ख्यातं शङ्करस्य प्रियावहम् ।
पञ्जरं कूटकोष्ठं च शिखरं च घटं तथा ॥ ६५ ॥
एवमादीनि सर्वाणि नागराणुचितं कुरु ।
अनेनैवाथवा कुर्यादेकानेकक(कादि)भूमया(य॰) ॥ ६६ ॥
यत्नेन(-नरत)म्भेषु कर्तव्यं तल्लं तस्मादि(द)मञ्चरम् ।
तचाएस्योचितव्यासं तुङ्गकुड्यं च गर्भरम् ॥ ६७ ॥
कर्तव्यं विधिना तेन गण्टा(घण्टा)लकारसंयुतम् ।
सालिन्द्रं सदनार्थं तु सोपानं रोहणाय वै ॥ ६८ ॥
तत्र तत्रोचितं कुर्याच्छालाभिष्ठकस्ताङ्कपे ।
तस्याग्रे मण्डपं कुर्यादनेकतलं तु वा ॥ ६९ ॥
माप्(गु)क्तविधिना कुर्यात्सर्वालङ्कारसंयुतम् ।
करालमुद्भिद्गुल्मासकल्पचित्र(थैथिचाकर्ष)णकर्मकृत् ॥ ७० ॥
नानाचित्रैर्विचित्रं तु कर्तव्यं विधिचोदितम् ।
एवं यः कुरुते हर्म्यं स्वशक्तदा मोक्षगं तु(-ना)वा ॥ ७१ ॥
इहैव धनवान्श्रीमान्पुत्रपौत्रसमन्वितः ।
दारादिभिश्चान्ते च रुद्रस्थानगतो मुदाऽस्मिन्नह ॥ ७२ ॥

सोनेकक्कुलजालं च या(पा)रयेत्तु मुद्रा च मा(ना) ॥ ७२ ॥

इति काश्यपे षोडशभूमिविधानमेकचत्वारिंशः पटलः ।

---

अथ द्विचत्वारिंशः पटलः ।

---

## मूर्धेष्टकाविधानम् ।

---

अथ वक्ष्ये विशेषेण मूर्धेष्टकाविधिं परम् ।
शिखरस्योदयार्धान्ते महानास्यवसानके ॥ १ ॥
शालि(शक्ति)ध्वजावसाने वा मूर्धेष्टकां तु विन्यसेत् ।
यावदस्य(थ)ःासमाप्तं तु तदा मूर्धे द्विजोऽष्टपः(ष्टका द्विज) ॥ २ ॥
एकाद्यनेकभूमानां हर्म्याणां तु विशेषतः ।
इष्टकाव्यासमायामं घनं चाद्येष्टकामिव ॥ ३ ॥
प्रासादस्याग्रतो देशे सौम्ये वायौ च गोपुरे ।
नवाष्टसप्तषट्पञ्चहस्तं वा मण्डपं ततम् ॥ ४ ॥
तद्विस्तारसमायामं चतुरश्रं समं कुरु ।
मण्डपं वा प्रपा वाऽथ षोडशस्तम्भसंयुतम् ॥ ५ ॥
चतुर्द्वारसमायुक्तं चतुस्तोरणसंयुतम् ।
पट्टं च नवं चैव वितानध्वजसंयुतम् ॥ ६ ॥
मुक्तासन्दर्भमाल्याद्यैरलंकृत्य विशेषतः ।
मण्डल(प)स्य त्रिभागैका मध्ये कृत्वा तु वेदिकाम् ॥ ७ ॥
वेदाङ्गुलोन्नतां देशमुपवेदियुगत्रयम् ।
शेषं वेदिविशालं तु भानुमात्रं तदुन्नतम् ॥ ८ ॥
भानुद्वयाङ्गुलोच्चं तु दर्पणोदरसंनिभम् ।
इह चाग्निसु(स्थ)ण्डिलानि चतुरश्राणि कल्पयेत् ॥ ९ ॥
अथवा वालुकैः स्थूलै ... .... .... ।
स्थण्डिलं कारणैर्दद्याद(कारयेद्धान्य)द्रोणैश्च शालिभिः॥१०॥
तदर्धैस्तण्डुलैस्तुभ्यं (लैःस्तूप्यं) तदर्धैश्च तिलैरपि ।
लाजैश्चैव परिस्तीर्य सेचाब्जं परिकल्पयेत् ॥ ११ ॥

नानापुष्पैः कुशैर्दर्भैः परिस्तीर्य विचक्षणः ।
मनोन्मनीकर्णिकाया तुदलेषु व्या[दिन्याद्या]पादि शक्तितः॥१२॥
गन्धपुष्पादिभिर्यष्ट्वा सत्यमात्रैर्विशेषतः ।
लोहजं दारुजं वाऽथ स्तूपिदण्डं च कारयेत् ॥ १३ ॥
आसनं खादिरं वाऽथ तिन्त्रिणीसारमेव वा ।
मधूर पनसकण्टूर भवेत्तद्दारुजत्तमम् ॥ १४ ॥
हेमगुप्तित ताम्रं वा त्रपुसंमिश्र एव वा ।
ऊर्ध्वभूम्यधितुङ्गं तु स्तूपिदण्डायतं भवेत् ॥ १५ ॥
मूर्ध्नि शैलोपरिष्टात्तु स्तूप्यन्तं वा तदायतम् ।
ऊर्ध्वभूम्यन्त(मेश्र) विस्तारं स्तूपिमूलविशालकम् ॥ १६ ॥
तस्याग्रमङ्गुलव्यासे मूलादाग्रक्रमात्कु(कृ)शम् ।
तुङ्गाणात्समं(यामात्समा)शं तु मूले वृत्ताश्रमाचरेत् ॥ १७ ॥
वंशं च यसमं स्वग्रे वृत्ताकारं प्रकल्पयेत् ।
चतुरश्रोपरिष्टात्तु सर्वं वृत्तमथापि वा ॥ १८ ॥
कर्तव्यं तस्य मूले तु त्रिखापान्तु(पान तु) योजयेत् ।
दण्डमूलसमव्यासं दण्डं दण्डाग्रयोरपि ॥ १९ ॥
योजयेल्लोहजं शुभः ।
प्रक्षाल्य पञ्चगव्यैस्तु दण्डं चैवेष्टकाऽपि च ॥ २० ॥
कर्णिकाया न्यसेद्दण्डं क्रमादीकु(क्रमादीश)महादिशि ।
चत्वारस्त्वेष्टका(चतस्रस्त्विष्टकाः)स्थाप्याः शिलादिष्टम्भनैर्जलैः ॥२१॥
पृथिव्यादिपरीजानी दण्डं तु विलिखेद्बुधः ।
शाण्डिल्यपट्क्रमाद्धूपगन्धपुष्पादिभिर्यजेत् ॥ २२ ॥
स्वर्णरजतताम्रैर्वा सूत्रैः कार्पासकैस्तु वा ।
पीतुरं बन्धयेद्विम स्वस्वबीजमनुस्मरन् ॥ २३ ॥
ब्रह्म विष्णुं च रुद्रं च ईश्वरं च सदाशिवम् ।
नके(शैले)ष्टकादिदण्डान्तमधिदेवान्क्रमान्न्यसेत् ॥ २४ ॥
नैवेद्यं दापयेद्देवे ताम्बूलं च निवेदयेत् ।
भक्त्यैवं नववस्त्रेणाऽऽच्छादयेत्कूर्चसंयुतम् ॥ २५ ॥
अभितः कलशा(ल्शा)नष्टौ सकूर्चान्सापिधानकान् ।
गन्धा(-धा)म्बुपूरि(तान्) नवरत्नपुष्पसमन्वितान् ॥ २६ ॥

फलपल्लवसंयुक्तानष्टौ विद्येश्वराधिपान् ।
संस्थाप्य स्वस्वमन्त्रेण नैवेद्यान्तं समर्चयेत् ॥ २७ ॥
ततो होमः मकर्तव्यो ह्यग्न्याधानादिकं कुरु ।
समिधाज्यचरुलाजैयरान्सर्षादिभिर्यु(न्चर्वाज्यलाजैश्च यवैः सद्धि-
श्चिधा यु)श्चः ॥ २८ ॥
शतं वा शतमर्धं वा प्रत्येकं जुहुयात्क्रमात् ।
परब्रह्मषडङ्गैश्च क्षुरिकाबीजमुख्यरै(कैः) ॥ २९ ॥
आज्येन जुहुयाद्धीमान्प्रत्येकं पञ्चविंशतिम् ।
जयादिराष्ट्रा(नाऽभ्याता)नैश्च राष्ट्रभिर्थैव(भृद्भिश्च) होमयेत् ॥
ब्रह्मादिबीजमन्त्रैस्तु ह्यत्वाज्या(हुत्वाऽऽज्या)नि तथाऽऽहुति(तीः) ।
एवं जागरणं रात्रौ प्रभाते विपुले शुभे ॥ ३१ ॥
आचार्य(र्यो)मूर्ति वै(भिः)सार्धं स्नानं कृत्वा विधानतः ।
नव स्रधरोष्णीषो(नवस्रोष्णीषधरो) भस्मरुद्राक्षधारकः ॥ ३२ ॥
एवं यज्ञोपवीताढ्यः सितमाल्यानुलेपनः ।
हेमाङ्गुलीयकटककुण्डलाद्यैरलंकृतः ॥ ३३ ॥
वस्त्रयुग्मादिसंयुक्तं भूषणैर्भूषि(ष)शिल्पिनम् ।
आचार्यो मण्डपं गत्वा दण्डेनाष्टघनानलान् ॥ ३४ ॥
गन्धपुष्पादिभिर्यष्ट्वा होमं कृत्वा जयादिभिः ।
स्विष्टमग्नेतिमन्त्रेण पूर्णाहुतिं समाचरेत् ॥ ३५ ॥
स्थित(र)राश्यु(श्यु)दये विशेषपराश्युदयेऽपि वा ।
मीघो(ने)वा शुक्रसंयुक्ते तलोद्रि(तथा द)ष्टेऽथवा पुनः ॥ ३६ ॥
आचार्यशिल्पिभिश्चैव ने ह्यन्तौनुग्रहोपरि ।(?)
पुण्याहवाचनं यस्य मूर्ध्नेष्टकां निधापयेत् ॥ ३७ ॥
इष्टकास्तूपिकलपश्च ब्रह्मधामप्रदक्षिणे ।
नानालंकारसंयुक्ताः कृत्वा दर्भेऽनुलेपयेत् ॥ ३८ ॥
उत्तराभिमुखो भूत्वा आचार्यो मन्त्र(र्योऽनन्य)चेतसा ।
ब्रह्म विष्णुं च रुद्रं च ईश्वरं च सदाशिवम् ॥ ३९ ॥
विचिन्त्य स्वस्वमन्त्रैस्तु चतस्रो ह्यष्टका न्यसेत् ।
पृथिव्यात्मकं क्रमं तु सौम्याग्रं शाङ्करेषु च ॥ ४० ॥

सुपे स्थाने मया(त्वाग्नेयमा)श्रित्य भागग्रं रत्न(त्न)म्भसात्मकम् ।
सुपे नैर्ऋत्यमाश्रित्य सौम्याग्रं सलिलात्मकम् ॥ ४१ ॥
सुपे वि(वा)यव्यमाश्रित्य भागग्रं मरुतात्मकम् ।
एवं क्रमान्न्यसेद(स्था)त् सुनिच्छिद्रं समाचरेत् ॥ ४२ ॥
माणिक्यमरतमं(कतं)चैव वैडूर्यं त्विन्द्रनीलकम् ।
मौक्तिकं स्फटिकं चैव पद्मरागं प्रवालकम् ॥ ४३ ॥
वज्रं मध्ये दिशु(शि)स्थाप्य शक्तिबीजमनुस्मरन् ।
तदूर्ध्वे स्थापयेत्स्तूपिदण्डमीशानमन्त्रतः ॥ ४४ ॥
कलशस्योदकैः प्रोक्ष्य दण्डं चाश्म(पाषाण)पञ्जकम् ।
तत्तन्मूर्तीः समभ्यर्च्य गन्धैः पुष्पैश्च धूपकैः ॥ ४५ ॥
गलाम्भसा च सुदृढं स्थापयेद्वास्तुनिश्चलम् ।
ततोऽधश्छेपमिस्तरं कर्तव्यं स्थो(पो)त्थिता तथा ॥ ४६ ॥
शिखरोपरिष्टाच्च स्तूपिं प्रागुक्तविधिना कुरु ।
कराळादींस्ततः कुर्यान्निश्चलं सुदृढं यथा ॥ ४७ ॥
स्वर्णैर्वा रजतैर्वाऽथ ताम्रैर्वाऽऽच्छादयेद्दृढम् ।
कांश्य(र्गा च) तत्कृतार्थे च मा(आ)चार्याय प्रदापयेत् ॥ ४८ ॥
दक्षिणां दापयेत्तस्मै दशनिष्कं हिरण्मयम् ।
यागोपकरणं सर्वमाचार्याय च दापयेत् ॥ ४९ ॥
शिल्पिनो भो(नः पू)जयेत्पश्चाद् गोभूमिकाञ्चनादिभिः ।
एवं यः कुरुते मर्त्यः सोऽयाति(सयाति)शुभदं फलम् ॥ ५० ॥

इति श्रीकाश्यपशिल्पे मूर्धेष्टकाविधानं द्विचत्वारिंशः पटलः ।

---

अथ त्रिचत्वारिंशः पटलः ।

---

## प्राकारः ।

---

अथ वक्ष्ये विशेषेण प्राकाराणां च लक्षणम् ।
रक्षार्थं शोभनार्थं च शाला(वा)स्तु(या:)तदनरय च । १ ॥

प्रासादस्य विशालार्धं(र्धे)गुणभागैग(क)मेव वा ।
चतुर्भागैकभागं वा अन्तर्मण्डलविस्तृतम् ॥ २ ॥
अन्तर्हारविशालं तु तद्बाह्ये द्विगुणं हि तत् ।
मध्यहारविशालास्तु(लं तु)बाह्यान्तं मण्डलत्रयम् ॥ ३ ॥
मध्यादेस्तु विशालं च बाह्ये त्वादिचतुर्गुणम् ।
महामर्यादिविस्तार आद्यैः पञ्चगुणो भवेत् ॥ ४ ॥
प्रासादचरणाद्दिग्भ द्धोमा(द्धोमा)द्वा प्रथमस्य तु ।
प्रथमाद्द्वितीयनीवं तु द्वितीयात्तृतीयनीवकम् ॥ ५ ॥
तृतीयाच्चतुर्थं निष्क्रान्तं तस्मान्नीवं च पञ्चमम् ।
प्राकारं प्रतिनिष्क्रान्तं तस्मान्नीवं तु पञ्चमम्(सनीवं कुड्यसीमकम्)॥ ६ ॥
कुड्यमध्यमा(ध्याद)सानं वा कुड्यबाह्यं तथापि वा ।
अथवा शेषविमाणां नीवं होमाद्विधीयते ॥ ७ ॥
प्रथमं प्रकृतेस्तुल्यं तस्माद्गुणाद्भुक्तं नतम् ।
द्वितीयार्थं तु पञ्चान्तं तद्वदेव नतं क्रमात् ॥ ८ ॥
कल्पयं(ल्पयं वै)हर्म्यमानेन हस्तमानमथोच्यते ।
त्रिपञ्चसप्तहस्तेन प्रथमं त्रिविधं भवेत् ॥ ९ ॥
नवैकादशहस्तं च त्रयोदशं द्वितीयकम् ।
त्रिपञ्चसप्तदशहस्तं मै(तयै)कोनविंशतिः ॥ १० ॥
मध्यहारं त्रिधा प्रोक्तं मर्यादास्तु ततः शृणु ।
एकविंशत्रयोविंशपञ्चविंशत्करं भवेत् ॥ ११ ॥
सप्तविंशं नवविंशमेकत्रिंशत्करेण तु ।
महामर्यादिविस्तार एवं त्रिविधमुच्यते ॥ १२ ॥
एवमाभासहर्म्याणां विकल्पानां च कल्पयेत् ।
सप्तहस्तं समारभ्य पञ्चत्रिंशावसानकम् ॥ १३ ॥
प्रत्येकं प्रथमादीनां सालानां त्रित्रिमानकम् ।
त्रिपञ्चसंख्यया प्रोक्तं हर्म्याणां चन्द्रसंख्यया ॥ १४ ॥
नवहस्तं समारभ्य हस्तत्रिंशावसानकम् ।
मार्गे सालसमाख्या तु हर्म्याणां जातिसंज्ञका ॥ १५ ॥
प्रागुक्तहर्म्यमानैश्च शालायन्त्यं च संमतम् ।
पञ्चप्राकारमेवं हि त्रिधाकारमथोच्यते ॥ १६ ॥

द्वितीयं तृतीयशालं च चतुर्थं च प्रगृह्यताम् ।
यत्र यद्विहितं सालं हर्म्यहृद्यं तु लक्षयेत् ॥ १७ ॥
तस्यामुखे मुखायामं कल्पयेत्कल्पवित्तमः ।
बीजात्पादबीजं त्वर्धं त्रिपादं च समं तु वा ॥ १८ ॥
द्विगुणं त्रिगुणं चाऽथ चतुःपञ्चगुणं तु वा ।
कल्पयेत्तु मुखायामं बीजमूर्ध्नि द्विजोत्तम ॥ १९ ॥
अन्तर्मण्डलभित्तेस्तु विस्तारो व्योमहस्तकः ।
तस्माद्विमात्रवृद्ध्या वा पञ्चाग्रं वाऽथ वर्धयेत् ॥ २० ॥
सार्धहस्तद्विहस्तं तु महामध्यावसानकम् ।
भित्तिव्यासं समाख्यातमुत्सेधं शृणु सुव्रत ॥ २१ ॥
तद्व्यासात्त्रिचतुष्पञ्चगुणं वा सालतुङ्गकम् ।
अथवोत्तरसीमान्तं नीव्रान्तं वाजनान्तकम् ॥ २२ ॥
प्रस्तरेषु गलो वाऽथ सालतुङ्गमुदाहृतम् ।
ऋजुबीजतलोपेतं बाह्ये त्वभ्यन्तरार्जवम् ॥ २३ ॥
कुड्यमूलस्य विस्तारवस्त्वं(स्तं)शोनाग्रविस्तरम् ।
मूलादग्रं क्रमात्क्षीणं वस्वंशांशं द्विजोत्तम ॥ २४ ॥
अथवा हस्तमानेन सालोत्सेध वदाम्यहम् ।
प्रथमं फलकान्तं तु द्वितीयं फलकान्वितम् ॥ २५ ॥
बोध्यंतं स्यात्तृतीयं तु चतुर्थं मञ्चमा(का)न्तकम् ।
पञ्चमं तु कपोतान्तं पञ्चचा(सा)लोदयं क्रमात् ॥ २६ ॥
एतद्धि पञ्चशा(सा)लेषु तामामुक्तो ह्ययं विधिः ।
आवृतं मालिका वा स्यात्सहकारमथापि वा ॥ २७ ॥
मण्डपाकृतिकं वाऽथ मङ्गुमध्यमथापि वा ।
भूतवेदगुणं पक्षव्योमभूमधोन्यने ॥ २८ ॥
कुड्यस्योपरि कुड्यं स्यात्पादं पादोपरि न्यसेत् ।
तलं मं(म)ति तलं कुर्यात् पादं मत्यल्पनासिका ॥ २९ ॥
वक्ष्येऽहं पादमानं च पङ्क्तिमानं द्विजोत्तम ।
मूलहर्म्ये तु होमादि उत्तरान्तं यदुन्नतम् ॥ ३० ॥
तन्मानं सप्तधा भज्य पक्षांशं शु(सु)धरातलम् ।
दक्षन्तं(र्धांशं)पाददीर्घं नु पादं सव्याङ्गसंयुतम् ॥ ३१ ॥

धरातलं तदुक्तं वा ह्युजेयं वा प्रकल्पयेत् ।
मूलहर्म्ये तु हेमादि उत्तरांशं नवांशके ॥ ३२ ॥
धरातलं द्विभागं स्यात्सप्तांशं चरणोदयम् ।
उत्तरान्तं तु हेमादि रुद्रभागविभाजिते ॥ ३३ ॥
अधिष्ठानं गुणांशं स्याच्छेषं पादोदयं भवेत् ।
मूलप्रासादतुल्यं वा चरणं च धरातलम् ॥ ३४ ॥
पादोत्सेधांशमानं तु षट्सप्ताष्टौ तु वा भजेत् ।
एकांशं पादविष्कम्भं दार(र)वाश्मभयं तु वा ॥ ३५ ॥
तत्रिभागं द्विभागं वा त्रिपादं वाऽर्ध एव वा ।
कुड्यपादस्य विस्तारं सर्वत्र परिकल्पयेत् ॥ ३६ ॥
त्रिचतुष्पञ्चहस्तं वा परितो मालिकाकृति ।
हस्तद्वयं समारभ्य पञ्चहस्तावसानकम् ॥ ३७ ॥
गुणाङ्गुलमहृद्ध्या च पङ्क्त्यायां पञ्चविंशतिः ।
भेदेन कथितं विप्र सर्वत्र समपङ्क्तयः ॥ ३८ ॥
युग्मायुग्मं तु वा पङ्क्तिः सर्वत्र परिकल्पयेत् ।
मूलभागविशालं तु धर्मनन्दाग्निभाजिते ॥ ३९ ॥
एकांशरहिताग्रं स्यान्मूलादग्रं क्रमात्कृशम् ।
अग्रपादविशालं तु दण्ड इत्यभिधीयते ॥ ४० ॥
दण्डं त्रिपादमर्धं च क्रमाच्छ्रेष्ठान्तराधमम् ।
उत्तरोत्सेधमाख्यातं विस्तारं मूलपादवत् ॥ ४१ ॥
मध्यपादसमं वाऽथ अग्रपादसमं तु वा ।
उत्तरव्याससमाख्यातं श्रेष्ठान्तराधमं क्रमात् ॥ ४२ ॥
उत्तरोच्चत्रिभागैक(कं)मनोत्सेधानि(धं तु)नीव्रकम् ।
उत्तरोत्सेधतुल्यं तु तुलानीव्रमुदाहृतम् ॥ ४३ ॥
तदर्धं वा त्रिपादं वा तस्य विस्तारमेव हि ।
वाजने च(गु)लकोर्ध्वे वा तुलास्थापनमाचरेत् ॥ ४४ ॥
तुलार्धनीव्रविस्तारं जयन्तस्य तुलोपरि ।
जयन्य(न्ता)र्धविशालोच्चमनुवार्गमुदाहृतम् ॥ ४५ ॥
तुलान्तरं तुलोच्चं तु जयन्त्याश्च तदन्तरम् ।
मनुवार्गं तथा कल्प्यं दण्डमानेष्टकान्तरम् ॥ ४६ ॥

कपोतादीनि नीव्राङ्घ्रप्रस्तारोक्तवदाचरेत् ।
अथवा तुलोपरिष्टात्तु इष्टकास्तरणं कुरु ॥ ४७ ॥
सुधया गुडतोयैश्च इष्टकास्तरणं भवेत् ।
फलाम्लमुद्गगुल्माः सक्तरचिक्कणमाचरेत् ॥ ४८ ॥
इष्टकास्तरणं ह्येतच्छिला चेन्तुलोपरि ।
शैलजोत्फलकाभिश्च च्छादयेत्तु विशेषतः ॥ ४९ ॥
वाजनोर्ध्वे तु वाऽऽस्तारं सुधारूपं समाचरेत् ।
एवमाद्यतलं मोक्षमूर्ध्वभूमिं यदीच्छयाम् ॥ ५० ॥
मूलाग्रस्तम्भतुङ्गं तु मन्दमूलाग्रमानिते ।
एकाक्षरादिताङ्घ्रिश्च तथोर्ध्वोर्ध्वभूमयः ॥ ५१ ॥
प्रस्तरं च तथार्धावमेकानेकतलोऽपि च ।
प्रस्तरोपरि कर्तव्यं शिखिमेव परोदयम् ॥ ५२ ॥
छत्राकारं शिरोपेत सदाकारमथापि वा ।
सोपानमथवा वाज सदा कल्प्यान्तरे द्विज ॥ ५३ ॥
मृन्मयैर्लोष्टकैर्वाऽथ सारदारुमयैस्तथा ।
सोपान छादन कुर्याल्लुपक्रियाशिरोन्वितम् ॥ ५४ ॥
समाकारमिदं कथित यथेष्टं तेषु कल्पयेत् ॥ ५५ ॥
जातिपञ्चतलं कथात छन्दवेदतलं भवेत् ॥ ५६ ॥
विकल्प तथल वियादाभासत्वेष भूमिके ।
जात्यादीनां तु हर्म्याणां योग्य सालतलं कुरु ॥ ५ ।
मर्यादिसालमाश्रित्य पात(व)के पचनालयम् ।
नैर्ऋत्य आयुधस्थान वायव्यं शयनाहंकम् । ५८ ॥
शाङ्करे योगशाला स्यादमृशभागेऽथवा पुनः ।
आग्निश्च(येय)याम्ययोर्मध्ये कर्तव्यं जननालयम् ॥ ५९ ॥
सत्रा(शत्र)शाक्रयोर्मध्ये मज्ञ(ज्ज)नालयमेव हि ।
धान्यस्थानं च तत्पार्श्वे भुङ्क्ष्राजन(प)थेऽपि वा ॥ ६० ।
निर्ऋतिवारुणीमध्ये पुस्तकारक्षता(ना) महा,लयम् ।
तत्पार्श्वयोः प्रकर्तव्यं व्यञ्जनालयमुत्तमम् ॥ ६१ ।
सोमवायव्ययोर्मध्ये वस्त्राणामालयं कुरु ।
सोमशङ्करयोर्मध्ये गोर्वाणाम प्रकल्पयेत् ॥ ६२ ॥

दक्षपार्श्वे शयनस्थानं पर्यङ्केन समन्वितम् ।
पुष्पदन्तपदे चाऽथ महेन्द्र(माहेन्द्रे)पुष्पमण्डप ( ॥ ६३ ।
गृहक्षपपदे कुर्याद्धान्यालयं द्विजोत्तम ।
पाचि(रि)णो मालिकायां च एवमेव मकल्पयेत् ॥ ६४ ॥
मालिकास्वेपि(न्वे तु सो)माशे कूपस्थानमुदाहृतम् ।
अथवाऽन्यप्रकारेण वक्ष्ये संदेशनिर्णयम् ॥ ६५ ॥
शव(शक्र)शंकरयोर्मध्ये विद्यास्थानमुदाहृतम् ।
शंकरस्यांश(श्रीद)योर्मध्ये धनन्यास(स्थान)मुदाहृतम् ॥ ६६ ॥
याम्यपावकयोर्मध्ये पुष्पमण्डप उच्यते ।
याम्यनैरुम(नैर्ऋत)योर्मध्ये स्नानाम्बुकोष्ठमुच्यते ॥ ६७ ॥
निर्ऋतिवारुणीमध्ये धर्मश्रवणमण्डपम् ।
वायव्यवारुणीमध्ये आयुधस्थानमुच्यते ॥ ६८ ॥
वायव्यसौम्ययोर्मध्ये शयनस्थानमुच्यते ।
ईशानसौम्ययोर्मध्ये यागार्थं मण्डपं कुरु ॥ ६९ ॥
जयन्ते मज्जनशाला(नागा:र)स्याद्(मा)ग्रेये पचनाद(ल)यम् ।
परितो मालिकायां तु सकलस्थानमुच्यते ॥ ७० ॥
शांकरे नृत्तमूर्तिस्तु आग्नेये वृषवाहनम् ।
उमां स्कन्दं च सहितं नैर्ऋत्ये परिकल्पयेत् ॥ ७१ ॥
कङ्कालं वायुदिग्भागे भिक्षाटनं जयन्तके ।
सुलासं तु सत्यांशे वितथे त्रिपुरान्तकम् ॥ ७२ ॥
सुग्रीवे हरिरुद्रं स्याद् गन्धर्वे चन्द्रशेखरम् ।
शेषांशे कामदहनं मुख्ये कालारिमूर्तिकम् ॥ ७३ ॥
अदितेऽर्धनारिमूर्तिस्तु महेन्द्रे कल्याणसुन्दरम् ।
क्षेत्रपालं तु पर्जन्ये याम्ये वै दक्षिणेश्वरम् ॥ ७४ ॥
वारुणे लिङ्गमुद्भूतं सौम्ये तु गजहारिणम् ।
इत्यधर्म (हर्म्य)ांशे अन्तरालेषु कल्पयेत् ॥ ७५ ॥
मूलहर्म्ये समीक्ष्यैव सकलस्थापनं कुरु ।
प्राकारेषु चतुर्दिक्षु द्वाद(र)शोभादि कल्पयेत् ॥ ७६ ॥
प्राकारततिमध्ये तु दीर्घमध्येतिवेचनम् ।
अथवा मूलहर्म्यस्य मध्यसूत्रस्थितं भवेत् ॥ ७७ ॥

प्रधानद्वारमेकं वा द्वयं वाऽन्यत्तु जालकम् ।
प्राकारमेवमाख्यातं बाह्ये विधिर्विधीयते ॥ ७८ ॥
एकद्वित्रिचतुष्पञ्चदण्डबाह्यादिविस्तृतम् ।
तद्बाह्ये तु प्रपश्रेणिमनेन विधिना कुरु ॥ ७९ ॥
शैवानां परिवाराणां प्राच्यमावासमुच्यते ।
प्राच्यां वा सौम्यदेशे वा देशिकावासमुच्यते ॥ ८० ॥
दैवज्ञाम्बष्ठभिषजां वासस्थानं च याम्यके ।
नित्यन्धाहारजातानां पश्चिमे वासमुच्यते ॥ ८१ ॥
सर्वेषामपि भक्तानां वासमुत्तरपार्श्वके ।
अग्नौ महाव्रतस्थानं याम्ये पाशुपतालयम् ॥ ८२ ॥
कलामुखं तु नैर्ऋत्ये चोर्ध्वालयं तु वारुणे ।
वायौ तु आर्हतस्थाने सौम्ये भूसुरसत्रकम् ॥ ८३ ॥
ज्ञानाभ्यासादधः कुर्याद्दैवानां तु विशेषतः ।
तद्बाह्ये त्वीशदिग्भागे कार्यं महाजलाशयम् ॥ ८४ ॥
याम्यपावकयोर्मध्ये गोशालांशं प्रकल्पयेत् ।
वारुणीनैर्ऋतीमध्ये सूतिकावासमुच्यते ॥ ८५ ॥
वारुणानिलयोर्मध्ये रोगार्तानां निवासकम् ।
सौम्यवानिल(यव्य)योर्मध्ये बालशिक्षार्थमण्डपम् ॥ ८६ ॥
सोमशंकरयोर्मध्ये धान्यमण्डलिका भवेत् ।
तद्बाह्ये वलिते विप्र दासीनां गणिकादिनाम् ॥ ८७ ॥
नृत्तगेयाभ्यसानां (सतां) तु क्रयविक्रयजीविनाम् ।
चक्रिणां (चक्रिणां) वापकानांश्च कुलालानां तथैव च ॥ ८८ ॥
मत्स्यमांसोपजीवानां न तु (तूत)कारकयोगुना(पिता)म् ।
पिताश्मशूद्रकानां तु गोपालानां च कारुणाम् ॥ ८९ ॥
करणानां शूद्रश्रेणीवापस्थानपरिग्रहम् ।
परितः कल्पयेद्दीमान्पूर्वोक्तावसानकम् ॥ ९० ॥
तद्बाह्ये त्वीशदिग्भागे श्मशानं परिकल्पयेत् ।
दक्षिणे चोत्तरे वाऽपि स्थापत्यादिनिवासकम् ॥ ९१ ॥
ग्रामो वाह्ये तु कर्तव्यं रजकानां निवासकम् ।
तद्बाह्ये मे(क्रो)शमात्रे तु चण्डालश्रेणिरुच्यते ॥ ९२ ॥

प्राकारलक्षणं ह्येवं प्रोच्यते द्विजसत्तम ॥ ९३ ॥

इति काश्यपशिल्पे प्राकारलक्षणं त्रिचत्वारिंशः पटलः ।

---

अथ चतुश्चत्वारिंशः पटलः ।

---

मण्डपः ।

---

अथ वक्ष्ये विशेषेण मण्डपानां तु लक्षणम् ।
प्रासादस्थे(स्यै)व भूमौ तु प्रोच्यते मुखमण्डपः ॥ १ ॥
जातिश्च(च)न्द्रविकल्पानामाभासानां तथैव हि ।
प्रासादादिमुखे चैव दिशासु विदिशासु वा ॥ २ ॥
ग्रामादीनां तु मध्ये वा दिशासु विदिशासु च ।
उद्याने वा नदीतीरे तटाके वाऽथवा पुनः ॥ ३ ॥
देवार्थं मण्डपं कुर्याद्दृष्टदिङ्मुखमण्डपम् ।
प्रासादस्याग्रतः कुर्यान्मण्डपं तु (पाना) चतुष्टयम् ॥ ४ ॥
मुखमण्डपमादौ तु प्रतिमामण्डपं ततः ।
स्नापनार्थं तृतीयं तु नृत्तार्थं च चतुष्ट(र्थक)म् ॥ ५ ॥
तेषु वै प्रथमं प्राग्वद्द्वितीयादीनि चो(दिरथो)च्यते ।
अन्तमाराणि चैतानि(द्वारांश्च तानेतान् )मध्यद्वारादि(रांश्च) वा कुरु ॥
मण्डपं द(पान्म)ण्डपं तत्र शालाद्वा मण्डपान्तरम् ।
अन्तरालमिति स्यात्तमादौ तल्लक्षणं शृणु ॥ ७ ॥
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टकरं तु वा ।
नवधर्मप्रथ(यो)वाऽपि रुद्रहस्तमथापि वा ॥ ८ ॥
अन्तरालविशालं तु(लस्य) रुद्रसंख्या प्रकीर्तिता ।
यत्र यन्मण्डपं कुर्यात्तस्मिन्पङ्क्त्या विशेषतः ॥ ९ ॥
एकद्वित्रिचतुष्पञ्चभक्त्या त ऽप्यन्तरालकम् )
सावकाशान्तरालं वा भित्तिमध्यमथापि वा ॥ १० ॥
भित्तिमध्यान्तरालं चेत्पार्श्वयोर्वंशसंयुतम् ।
एकद्वित्रि अ(ऽत्र)भ्रपादं वा केशं (वेशं)प्रवत्येकमेव वा ॥ ११ ॥

द्वयोर्मध्ये(ध्ये च)द्वार वा जाल्कं वा प्रकल्पयेत्।
उत्तरे जलधाराश्च स्नानार्थं परिकल्पयेत्॥ १२॥
युग्मायुग्मं तु पङ्क्तिर्वाऽभ्यन्तरालं द्विजोत्तम।
अधिष्ठानादिसर्वाङ्गं मण्डपस्य सम भवेत्॥ १३॥
अन्तराल समाख्यात शृणु मण्डपलक्षणम्।
त्रिहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात्॥ १४॥
एवमेकोनविंश तु नवधा मण्डपं भवेत्।
आभाससदनाना तु आभासं मण्डप भवेत्॥ १५॥
एकविंशतिहस्तादिद्विद्विहस्तविवर्धनात्।
सप्तत्रिंशतिहस्ता(न्करा)न्त च विकं प नवधा भवेत्॥ १६॥
आभासानां च त्र्योग(ग्यं)स्वस्वयोग्यमथापि वा।
नवत्रिंशतिरा(तमा)रभ्य द्विद्विहस्तविवर्धनात्॥ १७॥
पञ्चाधिकं तु पञ्चाशत्करान्तं छन्दमुच्यते।
सप्तपञ्चकराऽऽरभ्य द्विद्विहस्तविवर्धनात्॥ १८॥
साधिसप्ततिहस्तान्त समृता जातिरुच्यते।
तद्विस्तारसम दीर्घं समाश्र मण्डपं भवेत्॥ १९॥
अ पर्धहस्तमारभ्य षड्ङ्गुलवर्धनात्।
पञ्चहस्तविधिर्मो(स्तावधि या)वत् पङ्क्तिन्यास तु कल्पयेत्॥२०॥
अर्धहस्त समारभ्य यावत्पञ्चकरावधि।
गुणाङ्गुलविवर्ध(द्ध्या)तु पङ्क्तिन्यास प्रकल्पयेत्॥ २१॥
सार्धद्विहस्तमारभ्य षडङ्गुलविवर्धनात्।
स्तम्भानामुदयं ह्येव स्तम्भन्यासप्रयोच्यते॥ २२॥
वस्वङ्गुल समारभ्य अर्धाङ्गुलविवर्धनात्।
एकोनविंशमात्रं तु त्रयोविंशाङ्घ्रिविस्तृतम्॥ २३॥
पादोच्च भानुरंशे दश वै चाष्ट वा भजेत्।
मूलाग्रार तदंशेन दण्डपूतूलमग्रम्॥ २४॥
तालिवा(पा)तल्लोत्तुङ्ग सामान्यं सर्वमण्डपे।
चर्वी(तल्ले)ोच्चे तु भूतांशे द्विभाग च सलोदयम्॥ २५॥
अर्द्धेतुङ्गाग्निवेदैर्भाग वाऽपि मयूरपम्।
उपपीठमधिष्ठानं केवलं वा मसूरकम्॥ २६॥

धरातलसमं मोच्चं द्विगुणं त्रिगुणं तु वा ।
उपपीठोदयं स्यात्तमुपपीठार्धय(र्धक)न्तु वा ॥ २७ ॥
उपपीठमधिष्ठानं चरणं प्रस्तरं तथा ।
नीव्रंशमलंकारं गुण्यं मागिव विद्यते ॥ २८ ॥
पङ्क्तित्रयसमायुक्तं षोडशस्तम्भसंयुतम् ।
चत्वाल्पनासिकोपेतं मध्ये कूटं तु एव वा ॥ २९ ॥
मण्डितं वाऽथ सर्वत्र चतुर्द्वारं इति(युतं)तु वा ।
अष्टदिग्वा(ष्टदिग्द्वा)रमेकं वा द्वय वा जालकोष्ठदिक् ॥ ३० ॥
बाह्ये सोपानसंयुक्तं चित्रितं तोरणादिभिः ।
तोरणादिविहीनं वा कल्पयं प्रथमं भवेत् ॥ ३१ ॥
चतुर्भक्त्या विशालं तु अष्टदिग्द्वारसंयुतम् ।
पूर्वेऽपरे(वोपर)द्विपत्ये(द्वत्ये)कभक्त्या विस्तारनीव्रकम् ॥ ३२॥
मध्यस्थाङ्घ्रिं परित्यज्य ऊर्ध्वे कूटं द्विभक्तिकम् ।
वसुपञ्जरसंयुक्तं द्वितीयं मण्डपं भवेत् ॥ ३३ ॥
पञ्चभक्त्या विमाग्रं(शालं)तु मध्ये कूटं द्विभागया ।
मण्डपं परितोऽष्टौनद्वात्रिंशच्चरणान्वितम् ॥ ३४ ॥
भानुद्विगुणसंराष्ट्रं पञ्जराष्टकसंयुतम् ।
इष्टदिग्द्वारसंयुक्तं द्वारन्य(म)त्रैककुड्यकम् ॥ ३५ ॥
द्वारस्थाने तु सोपानं सर्वालङ्कारसंयुतम् ।
कुड्यकुम्भलताद्यैस्तु भूषितं तु तृतीयकम् ॥ ३६ ॥
चतुरश्रं तु षड्भक्त्या मध्ये कूटं त्रिभागया ।
तत्कूटमष्टपादाढ्यं मध्ये रङ्गसमायुतम् ॥ ३७ ॥
चतुर्द्वारसमायुक्तमिष्टदिग्द्वारमेव वा ।
द्विभक्त्याऽपि हर्म्यं चैव भक्त्यादिप्रथमायुतम् ॥ ३८ ॥
अष्टदिग्भद्रसंयुक्तं चतुर्दिग्भद्रमेव वा ।
चत्वारिंशत्त्रिचाष्टाङ्घ्रियुक्तं वा तत्र यदिदम् ॥ ३९ ॥
चतुर्विंशाल्पनासाढ्यं कुड्यकुम्भलतादिक(न्वित)म् ।
तोरणाष्टकसंयुक्तं तृतीयं मण्डपं त्विदम् ॥ ४० ॥
चतुरश्रं तु सप्तांशं पञ्चयङ्घ्रिकसमायुतम् ।
नवभागेन तन्मध्ये कूटं वा मण्डिताङ्गणम् ॥ ४१ ॥

द्वात्रिंशद्च(त्त्व)नासाढ्यं चतुर्दिग्भद्रसंयुतम् ।
त्रिभागैकांशविस्तारं निर्गमं मुखभद्रकम् ॥ ४२ ॥
मध्यरङ्गसमोपेतं द्विष्ट(कमिष्ट)कुड्यसंयुत(समन्वित)म् ।
सर्वालंकारसंयुक्तं पञ्चमं परिकीर्तितम् ॥ ४३ ॥
युगाश्रमष्टपङ्क्त्या तु अशीतिचरणान्वितम् ।
चतुर्भागेन सन्मध्ये ऊर्ध्वकूटं प्रकल्पयेत् ॥ ४४ ॥
चतुर्दिग्द्वारसंयुक्तमिष्टदिक्चा(द्वा)रमेव वा ।
मुखसोपा(पा)नमभ्यर्धवासनीव्रसमन्वितम् ॥ ४५ ॥
मध्यरङ्गसमायुक्तं षडष्टनासिकान्वितम् ।
सर्वालंकारसंयुक्तं सप्तमं मण्डपं भवेत् ॥ ४६ ॥
चतुरश्रं दशांशं तु भाद्वावि(न्वधि)रूद्भाङ्घ्रिकम् ।
मध्ये चैवाष्टदिग्भागनवकूटसमायुतम् ॥ ४७ ॥
कूटोपरि नीव्रनाशे तु अ(न्त)न्तरालं प्रकल्पयेत् ।
पार्श्वोन्मुखेन सोपानं दिशि भद्रसमन्वितम् ॥ ४८ ॥
सर्वालंकारसंयुक्तमष्टमं मण्डपं भवेत् ।
रुद्रभक्त्या युगाश्रं तु मध्ये द्व्यंशेन कूटकम् ॥ ४९ ॥
मुखे सोपानसंयुक्तमिष्टदिग्भद्रसंयुतम् ।
द्वारन्य(म)त्रैन कुड्यांशमिष्टभागावसानकम् ॥ ५० ॥
सर्वालंकारसंयुक्तं नवमं मण्डपं भवेत् ।
द्वादशांशे युगाश्रं तु मध्ये द्व्यंशेन कूटकम् ॥ ५१ ॥
मण्डपस्य तु बाह्ये तु अंशेनालिन्द्रमिष्यते ।
तद्दिशेन तु विस्तारनिष्क्रान्तः स्याच्चतुर्दशी ॥ ५२ ॥
साष्टपष्टिसमं पादमाद्यङ्के तु प्रकल्पयेत् ।
सर्वालंकारसंयुक्तं दशमं मण्डपं भवेत् ॥ ५३ ॥
पेतमण्डपस्य तदायतम् ।
यस्योचितविभागं तु कृत्वा वा मण्डलं कुरु ॥ ५४ ॥
पङ्क्तित्रयविशालं तु पञ्चपङ्क्त्या विशालकम् ।
एकपार्श्वे पुरे वाऽथ पा(द्वा)रमंशेन कल्पयेत् ॥ ५५ ॥
पार्श्वे पा(द्वा)रयुतं द्वे तु त्रिंशदङ्घ्रिसमन्वितम् ।
तदेव परितोंऽशेन मण्डपाभ्यन्तरे रसः ॥ ५६ ॥

लुपादोर्ध्वे द्वनं कुर्याद्ष्टाविंशाङ्घ्रिसंयुतम् ।
पुरे पारयुतं चेत्तु चरणं चाष्टविंशतिः ॥ ५७ ॥
अथवा पारहीनं तु त्रिरष्टचरणान्वितम् ।
पादं मत्स्यल्पनासाढ्यं वेदिजालकतोरणम् ॥ ५८ ॥
नानाकुम्भलताद्यैस्तु कल्पितं प्रथमं भवेत् ।
चतुर्भित्तित्रिशाले तु आयामे तु षडंशकम् ॥ ५९ ॥
मण्डपं परितोंऽशेन कूटपञ्चान्तरेतरम् ।
द्विभक्तिविस्(स्तृ)तं चैकभक्त्या तु मुखभद्रकम् ॥ ६० ॥
द्वार्त्रि(द्वात्रि)शच्चरणोपेतं मण्डपस्य द्वितीयकम् ।
विशालं पञ्चभक्त्या स्यादायामे सप्तभग(प्तभक्त)यः ॥ ६१ ॥
त्रिपञ्चपक्ति(ङ्क्ति)विस्तारं दीर्घा मध्ये सभा भवेत् ।
मण्डपं परितोंऽशे तु इष्टदिग्भद्रसंयुतम् ॥ ६२ ॥
चत्वारिंशतिपादाढ्यं सर्वालंकारसंयुतम् ।
वेदिकाद्यैः समायुक्तं तृतीयं मण्डपं भवेत् ॥ ६३ ॥
रसभक्तिविशालं तु वसुभक्त्यायतं भवेत् ।
द्विचतुर्भक्तिविस्तारं दीर्घमध्ये महोदयम् ॥ ६४ ॥
मण्डपं परितोऽष्टांशमिष्टदीर्घकभद्रकम् ।
षष्टिसंख्याङ्घ्रिसंयुक्तं चतुर्थं मण्डपं भवेत् ॥ ६५ ॥
तारे सप्तविभागे तु नवभक्त्यायु(य)तान्वितम् ।
त्रिभक्तिविस्तृतं पञ्चभक्त्यायामसमं करम् ॥ ६६ ॥
तारत्रयोदशांशेन मध्यर्श(ध्यांशां)शेन कूटकम् ।
इष्टदिक्कुड्यसंयुक्तं चतुर्दिग्भद्रसंयुतम् ॥ ६७ ॥
प्रमुखे नन्दभागेन मुखभद्रं प्रकल्पयेत् ।
सद्वयं नवतीभक्त्या भक्त्याऽङ्घ्रिच(क)समन्वितम् ॥ ६८ ॥
सर्वालंकारसंयुक्तं द्वादशं मण्डपं भवेत् ।
त्रिपञ्चपङ्क्तिविस्तारमायामं चतुरश्रकम् ॥ ६९ ॥
मध्ये कूटं गुणांशेन श्वेने ऊर्ध्वसमन्वितम् ।
गुणांशं विस्तृतायामं मुखभद्रसमन्वितम् ॥ ७० ॥
इष्टदिक्कुड्यसंयुक्तमन्य(माय)ताङ्घ्रिसमन्वितम् ।
पञ्चांशं त्रिद्वयार्तिध्या द्विशतं चरणायतम् ॥ ७१ ॥

सर्वालंकारसंयुक्तं मण्डपं तु त्रयोदशम् ।
षोडशांशे युगाश्रं तु मध्ये कूटं द्विभागया ॥ ७२ ॥
साष्टात्रिंशत्समायुक्तं द्विशतं पादमुच्यते ।
मुखभंद्रमभागेन तदर्थे(र्धे)नेतरे दिशि ॥ ७३ ॥
सर्वालंकारसंयुक्तो मण्डपः स्याच्चतुर्दशः ।
एवं हि मनुभेदेन युगाश्रं मण्डपं विदुः ॥ ७४ ॥
[illegible] ऊर्ध्वं चतुस्त्रिंशदंशं सीमावसानकम् ।
चतुरश्रो मण्डपः स्यात्सर्वालंकारसंयुतः ॥ ७५ ॥
भित्तिस्तम्भं च परितः कर्तुरिच्छावशान्नयेत् ।
सभाश्रममण्डपं त्वेतद्वायामाथमयोच्यते ॥ ७६ ॥
विस्तारं पङ्क्तितुल्येव सा(त्यं स्यात्सा,यते वाऽथ पङ्क्तयः ।
विस्तारं पङ्क्तिमानं तु गुणाङ्गुलविवर्धनात् ॥ ७७ ॥
सप्तविंशाङ्गुलं यावत्तावद्वायनवोदितम् ।
षर्षाशीर्णं तथा वाऽथ मण्डपे न(म)कुरोदितम् ॥ ७८ ॥
नाश्रयेत्तु करं पूर्व(र्वे)मण्डपं तु समाचरेत् ।
अशोपघटमंख्या तु मागवदायासि(म)मायरेत् ॥ ७९ ॥
मण्डपे परितोऽष्टांशे द(इ)ष्टदिग्भद्रसंयुतम् ।
त्रिभक्तिविस्तृतं चैव भक्तया तन्मुखभद्रकम् ॥ ८० ॥
सप्ताधिकयद्द्वयाधिकयं पादमित्यभिधीयते ।
सर्वालंकारसंयुक्तं पञ्चमं मण्डपं भवेत् ॥ ८१ ॥
वसुभक्तिविशालं च दशभक्तया तथाऽन्वितम् ।
द्विचतुर्भागविस्तारदीर्घमध्यस(म)होदयम् ॥ ८२ ॥
परितो-मण्डपो हांशं मध्यस्तम्भाविवर्जितम् ।
इन्द्रादिन्द्रमुखाभद्रा(द्रमुखभद्रं च)चतुर्दर्धेशेन सुव्रत ॥ ८३ ॥
षण्णवत्पङ्घ्रिसंयुक्तं सर्वालंकारसंयुतम् ।
षष्ठपं मण्डपं ह्येव मोच्यते तु शिवार्हकम् ॥ ८४ ॥
नवभक्तया तयार्धं तु रुद्रभक्तया तयान्वितम् ।
एकत्रिभक्तिविस्तारं दीर्घमध्ये सभा भवेत् ॥ ८५ ॥
परितो देवमार्गं तु मण्डपं परिकल्पयेत् ।
त्रिचतुर्भागविस्तारं दीर्घस्यामुखभद्रकम् ॥ ८६ ॥

